ॐ अस्यां रात्रौ अमुकगोत्रस्य पितुरमुकप्रेतस्याऽऽद्यश्राद्धकरणाय भवन्तं ब्राह्मणमहमामन्त्रये इत्यामन्त्रयेत्। ॐ आमन्त्रितोऽस्मीति प्रतिवचने ब्राह्मणेनोक्ते ॐ अक्रोधनेन शौचपरेण सततं ब्रह्मवादिना ॥ भवितव्यं च भवता मया च श्राद्धकारिणा ॥ सर्वायासविनिर्मुक्तेन कामक्रोधविवार्जितेन भवितव्यं भवतां च श्वस्तने श्राद्धकर्मणि इति ब्राह्मणमुद्दिश्य पठेत्। यद्यविघ्नेन रजनी यास्यति तदा सर्वमेतत्करिष्यामीति तेनोक्ते ॐ इदं ते पाद्यमिति पाद्यं दत्त्वा द्विजं नमस्कृत्य प्रेतमुद्दिश्य तिलतैलेनाजानुविप्रपादौ प्रक्षालयेत्। अत्र स्त्रिया अप्युद्देश्यत्वे ॐ गतोऽसीत्यविकृतमेव पठनीयम्। आत्मत्वेनोद्देश्यत्वात्॥ अथैकादशाहकृत्यम् ॥ बहिर्नदीतीरादौ प्रातः श्वेतवस्त्रयुगलेन स्नात्वा सूर्योदये ब्राह्मणस्य श्मश्रुकर्म नखच्छेदनञ्च कारयित्वा ताम्रपात्रेण तैलोद्वर्तनेन स्नानोपकरणं च दद्यात्। स्वयं स्नात्वा कृतनित्यक्रियो नदीतीरे गृहे वा श्राद्धभूमिं परिकल्प्य पञ्चगव्येनोपलिप्य ज्वलदङ्गारैः संशोध्य गौरमृत्तिकयाऽऽच्छाद्य तिलैः सर्षपैश्च विकिरेत्॥ गोमयोपलिप्तावृतपाकस्थाने तिलान् विकीर्य परितश्छागान् बन्धयित्वा तत्र सपिण्डद्वारा

स्वयं वा नूतनमृन्मयभाण्डे पाकमारभेत। तत्राचान्तः पूर्वाभिमुख उदङ्मुखो वा शय्यां दद्यात्। तत्र ॐ सोपकरणशय्यायै नमः ॐब्राह्मणाय नमः इति देयब्राह्मणं त्रिः सम्पूज्य इमां सोपकरणां शय्यां ददानीति द्विजकरे जलदानं वारिणा शय्याभिषेचनञ्च कुर्यात्। ॐददस्वेति प्रतिवचनम्। तत्र कुशत्रयतिलजलान्यादाय ॐ अद्याशौचान्तद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकाम इमां सोपकरणां शय्यां विष्णुदैवत्यामगुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात्। ॐस्वस्तीति प्रतिवचनम्। ततः कुशत्रयतिलजलानि दक्षिणाद्रव्यं चादायॐ अद्य कृतैतत्सोपकरणशय्यादानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां च तुभ्यमहं संप्रददे इति दद्यात्। ततः प्रतिग्रहीता ॐ स्वस्तीति प्रतिवचनमुक्त्वा सोपकरणां शय्यां संस्पृशेत्। तत आचम्यॐफलवस्त्रसमन्वितकाञ्चनपुरुषाय नमः ॐ ब्राह्मणाय नमःइति देयब्राह्मणं त्रिः संपूज्य ॐ इमं फलवस्त्रसमन्वितकाञ्चनपुरुषं ददानीति द्विजकरे जलदानम्। वारिणा देयद्रव्यसेचनम्। कुशत्रयादीन्यादाय ॐअद्याशौचान्तद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकाम इदं फलवस्त्रसमन्वितकाञ्च

नपुरुषं विष्णुदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात्। ॐ स्वस्तीति प्रतिवचनम्। ततो हिरण्यदक्षिणाद्रव्यमादाय ॐ अद्य कृतैतत्फलवस्त्रसमन्वितकाञ्चनपुरुषदान प्रतिष्ठार्थमिदं हिरण्यमग्निदैवत्यममुकगोत्रायामुकशमण ब्राह्मणाय दक्षिणां च तुभ्यमहं संप्र ददे इति दद्यात्। ततः प्रतिग्रहीता ॐस्वस्तीत्युक्त्वा काञ्चनपुरुषं स्पृशेत्। तत आचम्य कुशत्रयति लजलान्यादाय ॐ अद्याशौचान्तद्वितीयेऽह्नि असुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकामो द्विज दम्पतिपूजनमहं करिष्ये इति संकल्प्य द्विजदम्पती पूजयेत्। तत्र क्रमः। ॐ द्विजदम्पतिभ्यां नमः एषोऽर्घः। द्विजदम्पतिभ्यां नमः इदमनुलेपनम् ॐद्विजदम्पतिभ्यां नम इत्युभयोः पादयोस्त्रिः पूजां कुर्यात्। ततः पुष्पजलाभ्यामेतानि धूपदीपनैवेद्यताम्बूलविभूषणवासांसि द्विजदम्पतिभ्यां नम इति दद्यात्। तौ नमस्कुर्यात। एतच्च द्विजदम्पतिपूजनं प्रधानत्वात् वृषोत्सर्गाकरणेऽपि कर्तव्यं शय्या दानवदिति॥ अथ वृषोत्सर्गप्रयोगः॥ तत्र वृषोत्सर्गसंभूतिं विविक्तवने गोमध्ये प्रागुदक्प्रवणं देशं नयेत् तत आचान्तः। पूर्वाभिमुख उपविश्य कुशत्रयतिलजलान्यादाय ॐ अद्याशौचान्तद्विती

यऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य मोक्षकामः सोपकरणवत्सतरीचतुष्टयसहितवृषोत्सर्गमहं करिष्ये इति संकल्पं कुर्यात्। नीलवृषप्राप्तौ नीलपदप्रक्षेपः कर्तव्यः। कार्त्तिक्यां वृषोत्सर्गे ॐ अद्य कार्तिक्यां तिथौ अमुकगोत्रस्य पितुरमुकशर्मणो मोक्षकामोऽपूपान् दत्त्वा सोपकरण वत्सतरीचतुष्टयसहितवृषोत्सर्गमहं करिष्ये इति संकल्पयेदिति विशेषः। वत्सतर्य्यष्टकपक्षे चतुष्टयपदस्थानेऽष्टकपदप्रक्षेपः। तत उत्तराभिमुखं ब्राह्मणमुपवेश्य ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कर्तव्यवृषोत्सर्गाङ्गभूतहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलवस्त्रयुगहेमालङ्करणैर्ब्रह्मत्वेन त्वामहं वृणे इति ब्राह्मणं वृणुयात्। ॐ वृतोऽस्मीति प्रतिवचनम्। ॐ यथाविहित कर्म कुरु इति यजमानस्तमुद्दिश्य वदेत्। ॐ करवाणीति तत्प्रतिवचनम्। ततः ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कर्तव्यवृषोत्सर्गाङ्गभूतहोमकर्म कर्तुममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलहेमालंकरणवासोभिर्होतृत्वेन त्वामहं वृणे इत्याचार्यं वृणुयात्। ॐ वृतोऽस्मीति प्रतिवचनम्। ॐ यथाविहितं कर्म कुरु इति यजमानस्तमु

द्दिश्य वदेत्। ॐ करवाणीति तत्प्रतिवचनम्। ततो होता आचान्तो गोमयोपलिप्तवेदिकायां प्राङ्मुख
उपविश्य पुरतः कुशैर्हस्तमात्रं चतुरस्त्रस्थण्डिलं परिसमुह्य कुशानैशान्यां क्षिप्त्वा गोमयोदकेनोप
लिप्य मध्ये प्रादेशमात्रमुत्तरक्रमेण स्रुवमूलेन त्रिरुल्लिख्य उल्लेखनक्रमेण दक्षिणस्याङ्गुष्ठानामिकाभ्यां
सङ्गताग्राभ्यां मृदमुद्धृत्य ऐशान्यां तां क्षिप्त्वा तं देशं जलेनाभ्युक्ष्य तत्र दक्षिणहस्तस्थकांस्येन तूष्णी
मग्निं स्थापयेत् । अग्नेर्दक्षिणतः परिस्तरणभूमिमतिक्रम्य शुद्धमासनमुपकल्प्य तत्र प्रागग्रकुशैः परि
स्तरणं विधाय ब्रह्माणमग्नेर्वायव्याः प्रदक्षिणमानीय कल्पितासने बर्हिर्हस्तमुदङ्मुखमुपवेशयेत् ।
ततोऽग्नेरुत्तरतः परिस्तरणभूमिमतिक्रम्य कुशत्रयमास्तीर्य तत्र सान्तरालमृत्पात्रस्थं बर्हिषाच्छादितं
सर्वकार्यार्थमुदकं क्षीरं च ब्रह्ममुखमवलोक्य निदध्यात् । तत उपमूललूनबर्हिषां मुष्टिचतुर्थभागे
नाग्नेयादीशानान्तं प्राच्यां ब्रह्मणोऽग्निपर्यन्तं दक्षिणस्यां नैर्ऋत्याद्वायव्यान्तं पश्चिमायामग्नितः
प्रणीतापर्यन्तमुत्तरस्यां स्तरणं कुर्यात् । तत आसादनमग्नेरुत्तरतः प्रणीतापश्चिमे प्राक्संस्थं वा ।
तद्यथा पवित्रच्छेदनार्थं कुशत्रयं पवित्रार्थमनन्तर्गर्भितं साग्रकुशपत्रद्वयं प्रोक्षण्यथ मृत्पात्रमाज्याथ

ताम्रस्थालीपायसचर्वर्थं मृत्तिकास्थाली स्रुवसंमार्जनार्थं कुशत्रयमुपयमनार्थं वेणीरूपं कुशत्रयं प्रादेशमितपलाशसमित्त्रयं स्रुवः आज्यं तण्डुलान् दुग्धमिति । एवमासाद्य तदुत्तरतः पौष्णं सिद्ध मेव पिष्टमयचरुं ब्रह्मदक्षिणार्थं पूर्णपात्रं होतृदक्षिणार्थं वस्त्रयुग्मसुवर्णकांस्यान्युपकल्पयेत् । ततो वाग्यतआसादितकुशपत्रद्वयमादाय पवित्रच्छेदनकुशैः प्रादेशमात्रं प्रमाण्य छिन्द्यात् । तानपास्य पवित्राभ्यां प्रणीतोदकमुत्पूय सपवित्रः करेण प्रणीतोदकं त्रिः प्रोक्षण्यां निधाय उदगग्रे पवित्रे व्यस्तहस्तयोरङ्गुष्ठानामिकाग्राभ्यामनयोरादाय तन्मध्येन प्रोक्षण्युदकं भूमौ त्रिः क्षिप्त्वा पवित्रे प्रोक्षण्यां निधाय तत्पात्रं दक्षिणहस्तेनादाय वामे निधाय दक्षिणहस्तानामिकाङ्गुष्ठा भ्यां तज्जलं किञ्चिदूर्ध्वमुत्क्षिप्य प्रणीताजलेन प्रोक्षणीमभिषिच्य तज्जलेन यथासादितं द्रव्यं प्रत्येकं सकृत्प्रोक्ष्य पवित्रशेषजलसहितपात्रं प्रणीताग्न्योरन्तरे निधाय आज्यस्थाल्यामाज्यं निरूप्य चरु-स्थाल्यां तण्डुलांस्त्रिःक्षिप्य प्रणीतोदकेन तांस्त्रिः प्रक्षाल्य तत्र प्रणीतोदकं दुग्धञ्च प्रक्षिप्य स्वयं चरुं ब्रह्मणा चाज्यं गृहीत्वा प्रदक्षिणीकृत्याग्निपूर्वेण नीत्वा दक्षिणत आज्यमुत्तरतः पायसं चरुं

श्रपणार्थं युगपदग्नौ निधाय उल्मुकं सहविष्कग्नेः प्रदक्षिणं भ्रामयित्वा तत्रैव क्षिप्त्वा स्रुवस्य प्राग
ग्रस्यावाङ्मुखस्याग्नौ प्रतपनमुत्तानस्य संमार्जनकुशैरभ्यन्तरतोऽग्रान्मूलपर्यन्तमध्यैर्मध्यत एव
मूलैर्बाह्यतो मूलादग्रपर्यन्तं संमार्जनं प्रणीताद्भिरभ्युक्षणं पुनः प्रतपनम् आस्तृतबर्हिषि स्वपुरतः प्राग
ग्रस्य स्थापनं विधाय ततः पाके वृत्ते स्वयमाज्यमुद्वास्याग्निपश्चिमेन नीत्वा प्रणीतोत्तरतो निधाय
ततः पायसचरुमुद्वास्याज्यपश्चिमेन नीत्वा आज्यस्योत्तरतो निधाय स्वपुरतः स्रुवोत्तरे आज्यं
तदुत्तरतश्चरुं निधाय प्रोक्षणीतः पवित्रे समानीय आज्ये प्रोक्षणीवदुत्पवनं कृत्वा पवित्रे प्रोक्षण्यां
निधाय आज्यमवेक्ष्य सत्यपद्रव्ये तन्निरस्य प्रोक्षण्युत्पवनं विधाय पायसचरोरुत्तरतः पूर्वसिद्ध
पिष्टकचरुं निधाय होमसमाप्तिपर्यन्तमुपग्रहार्थकुशैर्वामहस्ते उपग्रहं विधाय प्रजापतिं मनसा चिन्त
यन्नुत्तिष्ठन् प्रागग्रघृताक्तसमिद्द्वयं वह्नौ प्रक्षिप्योपविश्य प्रोक्षण्यद्भिः सहविष्कमग्निं प्रणीताब्रह्म
सहितं पर्युक्ष्य पवित्रे प्रणीतासु निधाय प्रोक्षणीपात्रं स्वस्थाने निदध्यात् । ततो ब्रह्मणा करबर्हिषा
न्वारब्धो दक्षिणजानु नामयित्वा संस्रवं विनैवाज्येन जुहुयात् स्वाहान्तो होमः इदमग्नये इति त्यागः।

ॐ इह रतिः स्वाहा इदमग्नये० १ ॐ इहरमथ ९ स्वाहा इदमग्नये० २ ॐ इह धृतिः स्वाहा इदमग्नये० ३ ॐ इह स्वधृतिः स्वाहा इदमग्नये० ४ ॐ उपसृजं धरुणं मातरं मात्रधरुणो मातरं धयन् स्वाहा इदमग्नये० ५ ॐ रायस्पोषमास्मसुदीधरत् स्वाहा इदमग्नये० ६ ततः प्राक्रूज्वग्नेर्दक्षिणभागे मनसा ॐ प्रजापतये स्वाहा इदं प्रजापातये० १ अग्नेरुत्तरभागे ऋजुप्राक् ॐ इन्द्राय स्वाहा इदमिन्द्राय० २ तत उत्तरपूर्वार्द्धे ॐ अग्नये स्वाहा इदमग्न० १ दक्षिणपूर्वार्द्धे ॐ सोमाय स्वाहा इद सोमाय० २ इत्याघारावाज्यभागौ च संस्रवं हुत्वा पायसं पैष्टकमेकं चादाय समिद्धतमेऽग्नौ संस्रवं विनैव पायसेन जुहुयात् । ॐ अग्नये स्वाहा इदमग्नये० १ ॐ रुद्राय स्वाहा इदं रुद्राय० २ ॐ शर्वाय स्वाहा इदं शर्वाय० ३ ॐ पशुपतये स्वाहा इदं पशुपतये० ४ ॐ उग्राय स्वाहा इदमुग्राय ५ ॐ उशनसे स्वाहा इदमुशनसे० ६ ॐ भवाय स्वाहा इदं भवाय० ७ ॐ महादेवाय स्वाहा इदं महादेवाय० ८ ॐ ईशानाय स्वाहा इदमीशानाय० ९ । इति हुत्वा पिष्टकेन ॐ पूषागाऽअन्वेतु नः पूषा रक्षत्वर्व्वतः । पूषावाजा ९ सनोतु नः स्वाहा इदं पूष्णे० १ ततः पायसपिष्टकाभ्यामुत्तरार्द्धावदानभूताभ्याम् ॐ

अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते० अथैर्मध्यभागे तत् आज्येन ॐ भूः स्वाहा इदमग्नये०
१ ॐ भुवः स्वाहा इदं वायवे० २ ॐ स्वः स्वाहा इदं सूर्याय० ३ ॐ त्वन्नोऽअग्ने व्वरुणस्य व्विद्वा
न्देवस्य हेडोऽअवयासिसीष्ठाः। यजिष्ठो व्वह्नितमः शोशुचानो व्विश्वाद्वेषा ॅ सि प्रमुमुग्ध्यस्मत्
स्वाहा इदमग्नीवरुणाभ्यां० ४ ॐ सत्वन्नोऽअग्ने व्वमोभवोतीनेदिष्ठोअस्याऽउषसो व्युष्टौ। अवयक्ष्व
नो व्वरुण ॅ रराणोव्वीहिमृडीक ॅ सुहवोनऽएधि स्वाहा इदमग्नये० ५ ॐ अयाश्चाग्नेस्यनभिशस्ति
पाश्चसत्वमित्वमयाअसि। अयानो यज्ञं वहास्ययानोधेहि भेषज ॅ स्वाहा इदमग्नये० ६ ॐ ये ते
शतंव्वरुण ये सहस्रं यज्ञियाः पाशाव्वितता महान्तः। तेभिर्नोऽअद्यसवितोतव्विष्णुर्व्विश्वे मुञ्चन्तु
मरुतःस्वर्क्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यो न मम ७ ॐ उदु
त्तमं व्वरुण पाशमस्स्मदवाधमं विमद्ध्यम ॅ श्रथाय। अथावयमादित्यव्व्रते तवानागसोऽअदितये
स्याम स्वाहा इदं वरुणाय० ८ ॐ प्रजापतये स्वाहा० इदं प्रजापतये० ९ इति मनसा। एवं हुत्वा
संस्रवप्राशनमाचमनं च कृत्वा पवित्राभ्यां शिरःप्रभृतिसंमार्जनम्। ॐ सुमित्रियान आपऽओषधयः

सन्त्विति मन्त्रेण । ततः ॐ दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च व्वयन्द्विष्मः इति मन्त्रेण प्रणीतोदकमैशान्यां निनयेत् । ततः फलपुष्पान्वितघृतेन ॐ मूर्द्धानं दिवोऽअरतिम्पृथिव्याव्वैश्वानरमृत आजातमग्निम् । कवि ँ सम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः स्वाहा इदमग्नये० इति यजमानसहितहोता पूर्णाहुतिं कुर्यात् । ततः स्तरणक्रमेण बर्हिरुत्थाप्याज्येनाभिघार्य्य ॐ देवा गातु व्विदोगातु व्वित्वागातुमितमनसस्पतऽइमं देवयज्ञ ँ स्वाहाव्वातेधाः स्वाहा इदमग्नय० इतिबर्हिर्होमं हस्तेनैव कुर्यात् । ततो यजमानः कुशत्रयतिलजलान्यादाय ॐ अद्य कर्त्तव्यवृषोत्सर्गाङ्गभूतकृतैतद्धोमकर्मणि कृतावेक्षणरूपब्रह्मकर्म्मप्रतिष्ठार्थमिदम्पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां च तुभ्यमहं संप्रददे इति ब्रह्मणे दक्षिणां च दद्यात् । ॐ स्वस्तीति प्रतिवचनम् । यजमानेन तत्परितोषार्थं किंचिद्दातव्यम् । ततो वस्त्रयुग्मसुवर्णकांस्यान्युपनीय कुशादीन्यादाय ॐ अद्य कर्त्तव्यवृषोत्सर्गाङ्गभूतकृतैतद्धोमप्रतिष्ठार्थमेतानि वस्त्रयुग्मसुवर्णकांस्यानि बृहस्पतिवह्निचन्द्रदैवत्यानि अमुकगोत्रायामुकशर्मणे ब्राह्मणाय होत्रे

दक्षिणां च तुभ्यमहं संप्रददे इति होत्रे तानि दक्षिणां च दद्यात् । ॐ स्वस्तीति प्रतिवचनम् । ततो रुद्राध्यायं जपित्वा कर्मकारमाहूय वृषमङ्कयेति ब्रूयात् । स चाग्निमपादपार्श्वे चक्रेण दक्षिणपश्चिम पादवामपार्श्वे त्रिशूलेन वृषभमङ्कयेत् । ततो वत्सतरीचतुष्टयसहितं वृषभं कुशजलेन स्नापयेत् । तत्र स्नानकरणमन्त्राः ॐ हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः॥ याऽअग्निं गर्भं दधिरे सुवर्णास्तानऽआपः श ९ स्योनाभवन्तु । ॐ यासा ९ राजा वरुणो याति मध्ये सत्या नृतेऽअवपश्यञ्जनानाम् ॥ याऽअग्निं गर्भं दधिरे सुवर्णास्तानऽआपः श ९ स्योनाभवन्तु॥ ॐ यासां देवा दिवि कृण्वन्तु भक्षं याऽअन्तरिक्षे बहुधा भवन्ति । याऽअग्निं गर्भं दधिरे सुवर्णास्तानऽआपः श ९ स्योनाभवन्तु ॥ ॐ शिवेनमा चक्षुषा पश्यतापः शिवयातन्वोपस्पृशत त्वचं मे॥ घृतच्युतः शुचयो याः पावकास्तानऽआपः शः ९ स्योनाभवन्तु ॥ ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ॥ शंयोर भिस्रवन्तु नः ॥ ततो लोहघण्टिकानूपुरकनककपर्दिकादिभिः पञ्चाप्यलंकृत्य सावित्रीमघमर्षणं रुद्रा ध्यायं पुरुषसूक्तं ॐ यद्देवा देवहेडनं देवासश्चकृमा वयम् । अग्निर्मातस्मादेनसोविश्वान्मुञ्चत्व ९

हसः ॥ यदि देवा यदि नक्तमेना ँ सि चकृमा वयम् ॥ वायुर्मातस्मादेनसो विश्वान्मुञ्चत्व ँहसः
यदिजाग्रद्यदि स्वप्न एना ँ सि चकृमा वयम् ॥ सूर्यो मातस्मादेनसो विश्वान्मुञ्चत्व ँ हसः ।
इत्यादि ऋक्त्रयं कूष्माण्डीश्च जपेत् । ततो वृषभस्य दक्षिणकर्णे ॐ पिता वत्सानां पतिरघ्नियाना
नामथो पितामहतागर्गराणाम् । वत्सोजरायुः प्रतिधुक् पीयूषऽआमिक्षाघृतंतद्वस्यैरेतः ॐ वृषोऽसि
भगवान्धर्मश्चतुष्पादः प्रकीर्तितः । वृणोमि त्वामहं भक्त्या स मां रक्षतु सर्वतः । इति मन्त्रद्वयं
जप्त्वा कुशत्रयतिलजलान्यादाय ॐ अद्याशौचान्तद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य
मोक्षकामो रुद्रदैवत्य वृषम्--एनं युवानं पतिं वो ददानि तेन क्रीडन्तश्चरथ प्रियेण। मानः साप्य
जनुषासुभगा रायस्पोषेण समिषा मदेमेत्युत्सृजेत् । लोहितो यस्तु वर्णेन पुच्छाग्रेण तु
पाण्डुरः ॥ श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥ नीलवृषे नीलपदप्रक्षेपः कार्त्ति-
क्यां वृषोत्सर्गे वृषोत्सर्गनिमित्तकमाभ्युदयिकश्राद्धं कृत्वा ॐ अद्य कार्त्तिक्यां वृषमुत्सृज्यमानोऽहमि
मानपूपान् विष्णुदैवत्यानमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे इति अपूपत्रयं ब्राह्मणाय

दद्यात् । दक्षिणां च दद्यात् । ॐ अद्य कार्त्तिक्यामपूपान्दत्त्वाऽमुकगोत्रस्य पितुरमुकप्रेतस्य मोक्ष-
कामो रुद्रदैवत्यं वृषमेनं युवानं पतिं वो ददानि तेन क्रीडन्तश्चरथ प्रियेण ॥ मा नः साप्त्याजनुषा
सुभगा रायस्पोषेण समिषामदेमेति वाक्यं वा वक्तव्यम् । एतयैवोत्सृजेरन्निति पारस्करवचनात्
अनयैव ऋचोत्सर्गः । ऋगर्थस्तु हे वत्सतर्य्यो वो युष्माकमेनं पतिं स्वामिनं युवानं तरुणं ददानि
त्यजानि । तेनैतेन वृषेण प्रियेण सह क्रीडन्तीः खेलन्त्यश्चरथ भ्रमथ । यूयमपि हे वत्सतर्य्यो मातरः
नोऽस्माकं मा नोऽस्मत्स्वत्वविषयाः किंतु मया त्यक्ताः । वयं वृषस्य भवतीनां त्यागेन रायस्पो
षेण धनसमृद्ध्या साप्त्याजनुषा सप्तजन्मव्यापकेन इषा अन्नेन संमदेम हृष्टा भवेम । सुभगाः
लोकप्रियाः । इति ऐशान्यां दिशि पश्चापि चालयेत् । पश्चापि पूजयेत् । एषोऽर्घः सोपकरणवत्सतरी
चतुष्टयसहिताय वृषाय नमः इदमनुलेपनम् । सोपकरणवत्सतरीचतुष्टयसहितवृषाय नमः पुष्पैः
पूजयेत् । एतानि धूपदीपनैवेद्यताम्बूलानि ॐ सोपकरणवत्सतरीचतुष्टयसहितवृषाय नमः । ततो
वत्सतरीचतुष्टयमध्यगतं वृषभमभिमन्त्रयेत् । तत्र मन्त्राः । ॐ समुद्रोऽसि नभस्वानार्द्रदानुशम्भूर्म

योभूरभिमाव्वाहि स्वाहा ॥ मारुतोऽसि मरुतां गणः शम्भूर्मयोभूरभिमाव्वाहि स्वाहा ॥ वस्यूरसि दुवस्वाञ्छम्भूर्मयोभूरभिमाव्वाहि स्वाहा ॥ ॐ यास्तेऽअग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः ॥ ता भिर्न्नोऽअद्यसर्व्वाभी रुचे जनाय नस्कृधि॥ या वो देवाः सूर्य्ये रुचो गोष्वश्वेषु यारुचः ।इन्द्रा ग्नीताभिः सर्वाभी रुचन्नो धत्त बृहस्पते ॥ रुचन्नो धेहि ब्राह्मणेषु रुच ँ राजसु नस्कृधि ॥ रुचं विश्येषु शूद्रेषु मयि धेहि रुचारुचम् ॥ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोध्युरुश ँ समानऽआयुः प्रमोषीः ॥ स्वर्गधर्म्मः स्वाहा स्वर्णा र्कः स्वाहा स्वर्णशुक्रः स्वाहा स्वर्णज्योतिः स्वाहा स्वर्णसूर्य्यः स्वाहा । ततः कृतापसव्यो दक्षिणा मुखो वामजानुं पातयित्वा यवतिलवृषपुच्छमोटकान्यादाय ताम्रपात्रादिना मन्त्रस्थं फलमुद्दिश्या ञ्जलित्रयेण तर्प्पयेदनेन मन्त्रेण--ॐस्वधा पितृभ्यो मातृभ्यो बन्धुभ्यश्चापि तृप्तये । मातृपक्षाश्च ये केचिद्ये चान्ये पितृपक्षजाः ॥ गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः । ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः ॥ वृषोत्सर्गेण ते सर्वे लभन्तां प्रीतिमुत्तमामिति । ततः कर्मकारमाहूयाभिमतवेतनं तस्मै

दद्यात् । उत्सृज्य ब्राह्मणाञ्श्रावयेत् । यत्किंचिद्द्विजने मयोत्सृष्टं तदन्यो न नयेत् न वाह्यं न चैतत्क्षीरं पातव्यं केनचित्किंचित्क्वचित् । रुद्राग्निबहुसर्पिष्कं पायसं ब्राह्मणान्भोजयेत् । अथ कपिलादानम् । ॐ सोपकरणायै सवत्सकपिलगवे नमः ॐ ब्राह्मणाय नमः इति देयद्रव्यब्राह्मणौ त्रिः संपूज्य ॐ इमां सोपकरणां सवत्सां कपिलां गां ददानीति द्विजकरे जलदानम् । जलेन देयद्रव्याभिषेचनम् । कुशादीन्यादाय ॐ अद्याशौचान्तद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकामः इमां कपिलां गां हेमशृङ्गीं रौप्यखुरां वस्त्रयुगच्छन्नां कांस्योपदोहां मुक्तालाङ्गूलभूषितां सवत्सां रुद्रदैवत्यामगुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे इति दद्यात् । ॐ स्वस्तीति प्रतिवचनम् । ततो दक्षिणाद्रव्यादिकमादय ॐ अद्य कृतैतत्सोपकरणसवत्सकपिलागोदानप्रतिष्ठार्थमिदं हिरण्यरूपामग्निदैवत्यामगुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां च तुभ्यमहं सम्प्रददे इति दक्षिणां च दद्यात् । ततः प्रतिग्रहीता ॐ स्वस्तीत्युक्त्वा गोपुच्छग्रहणं यथाशाखं कामस्तुतिं च कुर्यात् । तत्र कोदात्कस्मा अदात्कामोदात्कामायादात् कामो दाता कामः प्रतिग्रहीता कामैतत्ते इति यजुर्वेदे ।

ॐ क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामस्समुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामैतत्ते इति सामवेदे कामस्तुतिः । यथोक्तकपिलाऽलाभे केवलामपि दद्यात् । तत्र पूजादिपूर्ववत् । ॐ आशौचान्तद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्ति कामः इमां कपिलां गां रुद्रदैवत्याम् अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे इति दद्यात्। ॐ स्वस्तीति प्रतिवचनम् । ततो दक्षिणाद्रव्यादिकमादाय ॐ अद्य कृतैतत्कपिलगोदानप्रतिष्ठार्थ मिदं हिरण्यमग्निदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां च तुभ्यमहं संप्रददे इति दक्षिणां च दद्यात् । ॐ स्वस्तीति प्रतिवचनम् । गोपुच्छग्रहणं कामस्तुतिश्च पूर्ववत् । ततो महानद्यादौ सचैलं स्नात्वा तीर्थानि मनसा ध्यात्वा तज्जलेनात्मानमभ्युक्ष्योत्तरेत् । अथैकादशाहश्राद्धप्रयोगः । सच सुगतिसोपानानुसारेण लिख्यते । तत्र मध्याह्ने शुचिराचान्तः शुक्लद्विवासाः गोमयोपलिप्तायामपसव्यवत्कृतगोमूत्रमण्डलायां मण्डलाद्बहिः ॐ भूम्यै नमः इति त्रिः पुष्पाक्षतपूजितायां भूमौ दर्भेषु तिष्ठन् पात्रब्राह्मणं यजमानसवर्णेनाऽऽहूतं स्नातमाचान्तम् ॐ स्वागतमिति पृच्छेत् ॐ स्वागतमिति

तेनोक्ते उभावप्युपविशतः । ततः श्राद्धकर्ता इदं ते पाद्यमिति पाद्यमुपनीय विनीतः सन् पुनः पुनरभिनन्द्य पात्रब्राह्मणपादौ प्रक्षाल्यापसव्यादि कृत्वा जलतिलगन्धपुष्पयुतमर्घपात्रमादाय मोटकतिलजलानि चादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे एष पादार्घस्ते मयादीयते तवोपतिष्ठतामिति पादार्घं दद्यात् । ततः शिरसाभिवन्द्य जानुनि विश्राम्य ॐ इदं ते आचमनीयमित्याचमनीयोदकं ब्राह्मणाय दद्यात् । ततः स्वयं पादौ प्रक्षाल्याचम्य पात्रब्राह्मणमाचमय्याग्रे कृत्वा श्राद्धदेशमागत्योपविश्यान्नाभिप्रायेण सिद्धमिति पृच्छेत् । पूर्वरात्रे निमन्त्रणासंभवे तस्मिन्नेवाह्नि श्राद्धवेलायां मण्डपाद्बहिश्शुचिराचान्तः शुक्लद्विवासा गोमयोपलिप्तायामपसव्यवत्कृतगोमूत्रमण्डलायां मण्डलाद्बहिः ॐ भूम्यै नम इति त्रिः पुष्पाक्षतपूजितायां भूमौ दर्भेषु तिष्ठन्स्नातमाचान्तं ब्राह्मणं यजमानसवर्णेनाहूतम् ॐ स्वागतमिति पृच्छेत् ॐ स्वागतमिति तेनोक्ते उभावप्युपविशतः । ततः श्राद्धकर्ता इदं ते पाद्यमिति पाद्यमुपनीय विनीतः सन् पुनः पुनरभिनन्द्यपात्रब्राह्मणपादौ प्रक्षाल्यापसव्यादि कृत्वा पुष्पचन्दनताम्बूलानि ब्राह्मणाय दत्त्वा ब्राह्मणदक्षिणजानुं स्पृष्ट्वा ॐ अद्यामुकगोत्रस्य

पितुरमुकप्रेतस्याद्यश्राद्धकरणाय भवन्तं ब्राह्मणमामन्त्रये इत्युक्ते ॐ आमन्त्रितोऽस्मीति प्रति वचनम् । अक्रोधनेन शौचपरेण सततं ब्रह्मवादिना भवितव्यं च भवता मया च श्राद्धकारिणा ॥ सर्वायासविनिर्मुक्तेन कामक्रोधविवर्जितेन भवितव्यं भवता नोऽद्यतने श्राद्धकर्मणीति ब्राह्मणं नियमाञ्श्रावयेत् । भवितव्यमिति तनोक्ते अर्घं परिकल्प्यादाय मोटकादिकं चादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे एष पादार्घस्ते मया दीयते तवोपतिष्ठतामिति पादार्घं दद्यात् । ततः शिरसाभिवन्द्य जानुनी विश्राव्य ॐ इदं ते आचमनीयमित्याचमनीयजलं ब्राह्मणाय दद्यात् । ततस्तिलतैलेन पात्रब्राह्मणपादावाजानु अभ्यञ्जयेत् । ततः स्वयं पादौ प्रक्षाल्याचम्य पात्रब्राह्मणमग्रे कृत्वा श्राद्धदेशमागत्योपविश्यान्नाभिप्रायेण सिद्धमिति पृच्छेत् । दक्षिणाग्रैककुशसहितनेपालकम्बलाद्यादिदिकं ब्राह्मणोपवेशनायासनमुपकल्प्यासनं स्पृशन् ॐ अत्रासने देवराजाभ्यनुज्ञातो विश्रम्यतां द्विज वर्य्यानुग्रहात् ॥ प्रसादयेत्वासनं गृहाण पूतं ज्ञानाग्निपूतेन करेण विप्र इतिमन्त्रं पठित्वा [illegible] ..नब्राह्मणं दक्षिणहस्तेन धृत्वोदङ्मुखमुपवेशयेत । ततः पात्रब्राह्मणस्य पा[illegible]योस्तले दक्षिणाग्रकुशत्रयं

दद्यात्। आसनसमीपे च तिलतैलेन घृतेन वा श्राद्धसमाप्तिपर्यन्तस्थायिनं दीपं कुर्यात्। तद्रक्षा पात्रब्राह्मणेन कर्तव्या। रक्षोघ्नान् गौरसर्षपान्तिलांश्च श्राद्धदेशे सन्निधापयेत्। काककुक्कुटादीञ्श्राद्धहन्तॄनपसारयेत्। ततः पूर्वाभिमुखः कुशोदकेन ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा॥ यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यान्तरः शुचिः॥ इति पठित्वा ॐ पुण्डरीकाक्षः पुनात्विति पुण्डरीकाक्षं स्मृत्वा श्राद्धीयद्रव्याण्यात्मानं च सिञ्चेत्॥ ततः कुशत्रयतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्तिकामः आद्यादीनि यथाकालं षोडशश्राद्धान्यहं करिष्ये इति सङ्कल्पयेत्। एकादशमासाभ्यन्तरेऽधिमासपाते षोडशपदस्थाने सप्तदशपदं प्रयोज्यम्। ततः कुशत्रयतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्तिहेतुकषोडशश्राद्धान्तर्गताद्यश्राद्धमहं करिष्ये इति सङ्कल्पयेत्। ॐ कुरुष्वेति ब्राह्मणप्रतिवचनम्। ॐ गायत्रीजपमहं करिष्ये इति पृष्ट्वा कुरुष्वेति ब्राह्मणानुज्ञातः त्रिर्गायत्रीं जपेत्। सव्याहृतिका सप्रणवा च जपनीया गायत्री। देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च॥ नमः स्वाहायै

स्वधायै नित्यमेव नमो नमः ॥ इति त्रिर्जपेत् । ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानु मोँटकतिलजलान्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे इदमासनं ते मया दीयते तवो पतिष्ठतामिति मोटकरूपमासनं तिलजलप्रोक्षितं दक्षिणाग्रमुत्सृजेत् । ततः सव्यं कृत्वा प्राङ्मुख उपविष्टः ॐ छत्राय नमः ॐ ब्राह्मणाय नमः इति देयब्राह्मणौ त्रिः सम्पूज्य इदं छत्रं ददानीति द्विज करे जलं दत्त्वा छत्रमभिषिच्य कुशत्रयतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्यावरण काम इदं छत्रमुत्तानाङ्गिरोदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रदद इति दद्यात् । ॐ स्वस्तीति प्रतिवचनम् । ततस्तिलजलकुशान् दक्षिणाद्रव्यं चादाय ॐ अद्य कृतैतच्छत्रदानप्रतिष्ठा र्थमिदं हिरण्यमग्निदैवत्यममुकशर्मणे ब्राह्मणाय दक्षिणां च तुभ्यमहं सम्प्रददे इति दक्षिणां च दद्यात् । ततः प्रतिग्रहीता ॐ स्वस्तीत्युक्त्वा छत्रदण्डे धारयेत् । ॐ उपानद्भ्यां नमः ॐ ब्राह्मणाय नमः इति देयब्राह्मणौ त्रिः संपूज्य ॐ इमे उपानहौ ददानीति द्विजकरे जलदानमुपानहावभिषिच्य कुशादीन्या दाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य तप्तवालुकासिकण्टकितभूदुर्गसन्तरणकाम इमे उपान

हावुत्तानाङ्गिरोदैवत्ये अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात् । ॐ स्वस्तीति प्रतिवचनम् । ततः कुशादीन्दक्षिणाद्रव्यं चादाय ॐ अद्य कृतैतदुपानद्दानप्रतिष्ठार्थमिदं हिरण्यमग्नि दैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां च तुभ्यमहं संप्रददे इति दक्षिणां च दद्यात् । ततः प्रति ग्रहीताॐस्वस्तीत्युक्त्वा उपानहावारोहेत् । ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुः ॐअ पहताऽसुरारक्षाꣳसि वेदिषद इति श्राद्धदेशे वामावर्तेन तिलान्विकीर्य्य ॐ आयन्तु नः पितरः सोम्या सोऽग्निष्ष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधयामदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मानिति जपेत् । ततोऽर्घपात्रोपरि अच्छिन्नं दक्षिणाग्रं पवित्रं धृत्वा ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये । शंयो रभिस्रवन्तु न इति मन्त्रेणार्घपात्रे जलं दत्त्वा ॐ तिलोऽसि सोमदैवत्यो गोसवे देवनिर्मितः । प्रत्न वद्भिः प्रत्तः स्वधया पितॄँल्लोकान्प्रीणाहि नः स्वाहेति तिलान्प्रक्षिप्य गन्धपुष्पे तूष्णीं तत्र प्रक्षिप्य अर्घपात्रं वामहस्ते कृत्वा पवित्रं ब्राह्मणहस्ते उत्तराग्रं दत्त्वा तदुपरि किंचिदुदकान्तरं दत्त्वा ॐ या दिव्या आपः पयसा संबभूवुर्याऽअन्तरिक्षऽउत पार्थिवीर्याः । हिरण्यवर्णा यज्ञियास्तानऽआपः

शिवाः श ँ स्योना सुहवा भवन्तु इति पठित्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति ब्राह्मणकरे पवित्रोपरि अर्घजलं दद्दुत्सृजेत् । पात्रं च वामपार्श्वे पित्रे स्थानमसीत्यर्घपात्रं सपवित्रमधोमुखं स्थापयेत् । तच्च दक्षिणादानपर्यन्तं न चालयेत् । ततः श्राद्धदेशे तिलान् विकीर्य दर्भहस्तो भूतले प्रेतमाह्वयेत् । तत्र मन्त्रः— इमं लोकं परित्यज्य गतोऽसि परमां गतिमिति । अत्र स्त्रीश्राद्धेऽपि गतोऽसीत्येवमेव पठनीयमात्मत्वेनोद्देश्यत्वात् । ततो मोटकादीन्यादाय ॐअद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ते मया दीयन्ते तवोपतिष्ठन्तामिति गन्धादीनुत्सृजेत् । ततः सर्वसुगन्धिरिति मन्त्रेण गन्धान् ॐ श्रिया देव्या इति मन्त्रेण पुष्पम् ॐ वनस्पतिरस इति मन्त्रेण धूपं ब्राह्मणाय निवेदयेत् । ॐ तत एष दीप इति निवेदिते ॐ सुदीपः इति ब्राह्मणो वदेत् । ॐ एतानि ताम्बूलानीति निवेदिते ॐ सुताम्बूलानीति ब्राह्मणो वदेत् । ॐ इमे यज्ञोपवीते इति निवेदिते ॐ सुयज्ञोपवीते इति ब्राह्मणो वदेत् । ॐ एतानि वासांसीति निवेदिते

ॐ सुवासांसीति ब्राह्मणो वदेत्। पुष्पाणि शिखायामेव द्विजेन धार्याणि । ततः प्रतोपभुक्तशय्यास
नादिकं गन्धपुष्पैरभ्यर्च्य श्राद्धभोक्त्रे प्रतिपादयेत् । ततो गौरमृत्तिकया नीवारचूर्णेन जलेन वा
ब्राह्मणं वेष्टयित्वा चतुरस्रं मण्डलं कुर्यात्। परकीयभूमौ श्राद्धकरणे श्राद्धीयवस्तुषु किंचिदुद्धृत्य
तिलजलघृतयुक्तमन्नम् ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो न मम इति दद्यात् । जीवतां भूस्वामिनां
किंचिद्दानानिकरं दद्यात्। तत उष्णमन्नं ताम्रपात्रेण कराभ्यामादाय मनाक् स्थित्वा पितरं
ध्यात्वा पुरुषतृप्तिक्षमं परिविष्यात् । तत इदं मधुरमिदमत्युष्णमित्यादि व्यञ्जनगुणानुत्की
र्तयेत् मांसादीनि भूयिष्ठपात्रान्तरेषु परिविष्य घृतं सतिलजलं चोपनीय अन्नं मधुनाऽभिघा
रयेत् । ॐमधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्न्नः सन्त्वोषधीः ॥ ॐ मधु
नक्तमुतोषसो मधुमत्पार्थिव ँ रजः ॥ मधुद्यौरस्तु नः पिता ॥ ॐमधुमान्नो व्वनस्पतिर्मधुमा ँ
अस्तु सूर्य्यः ॥ माध्वीर्ग्गावो भवन्तु नः ॥ ॐ मधु मधु मध्विति च पठित्वा व्यस्ताभ्यां पाणिभ्यां
पात्रमालभ्य ॐपृथ्वी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि स्वाहा इति जपेत्। ॐ इदं

विष्णुर्व्विचक्रमे त्रेधा निदधे पदम्॥समूढमस्य पाꣳसुरे इति पठन्नमृतरूपतयान्नं विचिन्त्य ॐ कृष्ण कव्यमिदं रक्ष मदीयमिति पठित्वा ॐइदमन्नम् ॐइमा आपः ॐइदमाज्यम् ॐइदं हविरिति पात्रब्राह्मण दक्षिणाङ्गुष्ठमन्नजलघृतादिषु निवेश्य ॐ अपहताऽअसुरा रक्षाꣳसि वेदिषद इत्यन्नोपरि बहून् तिलान्प्रक्षिप्य मोटकादीन्यादाय वामेन पाणिना पात्रमत्यजन् ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठतामित्युत्सृजत् ॥ ततो भवान् प्राशयत्विति ब्रूयात्। विप्रायापोशनं दत्त्वा सप्रणवां सव्याहृतिकां गायत्रीम् ॐ मधुवाता इत्यादिऋचम् ॐ मधु मधु मध्विति च जपित्वा ॐ अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत्। तत्सर्वमच्छिद्रमस्त्विति पठित्वा ॐ यथासुखं जुषस्वेति ब्राह्मणं ब्रूयात्। ब्राह्मणश्च वामेन पाणिना पात्रमत्यजन् ॐकारपूर्वकं भुञ्जीत। संज्ञयाऽपि भक्ष्यप्रार्थनां न कुर्य्यात्। श्राद्धकर्ता दर्भेष्वासीनः सप्रणवव्याहृतिकां गायत्रीं मधु वाता इत्यादिऋचं मधुमधु मध्विति च जपेत् गायत्रीं ब्राह्मणं श्रावयित्वा ॐ कृणुष्व पाज इत्यादीन् रक्षोघ्नमन्त्रान् पठित्वा भूमिं तिलैरास्तीर्य्य ब्राह्मणं पितृरूपतया ध्यायेत्। तत उदीरतामित्यादि

पितृमन्त्रान् ॐ सहस्त्रशीर्षा इत्यादिपुरुषसूक्तम् ॐ आशुः शिशान इत्यादिकमप्रतिरथमन्यान्यपि शतरुद्रियप्रभृतिपवित्राणि रुचिस्तवप्रभृतीनि च पठेत् । अन्ततः ॐ नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे । नमः पिनाकहस्ताय वज्रहस्ताय वै नम इति श्लोकमपि पठेत् । वीणादिभि र्ब्राह्मणं हर्षयन्व्यञ्जनादिगुणान् कीर्तयन् । तस्य यत्र यत्रेच्छोपलभ्यते तत्तदुपनयन्मन्दंमन्दं भोजयेत् । ततस्तं तृप्तं ज्ञात्वा उच्छिष्टसन्निधावास्तृतदक्षिणाग्रकुशत्रयीं भूमिं प्रोक्ष्य सर्वप्रका रकमन्नं तिलघृतसहितं जलेनाप्लाव्य गृहीत्वा ॐअग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिमिति मन्त्रेण मन्त्रस्थफलमुद्दिश्य कुशोपरि तदन्नं विकिरेत्। ततः सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा अपसव्यं कृत्वा दक्षिणाभिमुखो ब्राह्मणाय जलगण्डूषमिति दत्त्वा ॐ स्वदितमिति ब्राह्मणं पृच्छेत् ।ॐ सुस्वदितमिति तेनोक्ते ॐ पिण्डमहं करिष्ये इति पृच्छेत् । कुरुष्वेति ब्राह्मणानुज्ञातः उच्छिष्टसन्निधौ चतुरस्रं हस्तैकप्रमाणं दक्षिणप्रवणं चतुरङ्गुलोच्छ्रितं स्थानं निर्माय तन्मध्ये वामहस्तेन दर्भपिञ्जुलीमादाय तन्मूलेन वामान्वारब्धदक्षिणकरेण प्रादेशमात्रं

लिखेत् ॥ ॐ अपहताऽसुरा रक्षा ँसि वेदिषदः इति मन्त्रेण रेखामुल्लिखेत् । दर्भपिञ्जुलीमुत्तरस्यां दिशि निःक्षिपेत् । तदुपरि ये रूपाणि प्रतिमुञ्चमानाऽअसुराः सन्तः स्वधया चरन्ति ॥ परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकान्प्रणुदात्वस्मात् इत्युल्मुकं भ्रामयित्वा रेखादक्षिणतः क्षिपेत् । तदुपरि उपमूलसकृल्लूनकुशान्दक्षिणाग्रानास्तीर्य सव्यं कृत्वा ॐ देवताभ्य इति त्रिर्जपेत् । ततोऽपसव्यं कृत्वा पर्णपुटकादिकमेकं तिलजलगन्धपुष्पयुतं वामहस्ते कृत्वा दक्षिणहस्ते मोटकादिकमादाय ॐ अद्या मुकगोत्र पितरमुकप्रेत आद्यश्राद्धे पिण्डस्थानेऽत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठतामिति कुशोपरि अवनेजनं दद्यात् । ततः श्राद्धशेषमन्नं सर्वं व्यञ्जनतिलमधुघृतयुतमेकीकृत्य एतेन बिल्वपरिमाणपिण्डं निर्माय घृतमध्वभिघारितं कृत्वा दक्षिणहस्तेनादाय मोटकादींश्चादाय ॐअद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठतामिति कुशोपरि अवनेजनस्थाने सव्योपगृहीतदक्षिण करेण पिण्डं दद्यात् । आस्तृतदर्भमूले करं प्रोक्ष्य सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा अपसव्यं कृत्वा ॐ अत्र पितर्मादयस्व यथाभागमावृषायस्व इति पठित्वा वामावर्तेनोदङ्मुखो भूत्वा मनाक्श्वासं

नियम्य तेनैव यथासुखं पर्यावर्तयन् पितरं भास्वरमूर्तिं ध्यायन् अमीमदन्त पितरो यथाभागमावृषा यिष्ट इति पठेत्। अवनेजनावशिष्टजलयुतपात्रं वामहस्ते कृत्वा दक्षिणहस्तेन मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धपिण्डेऽत्र प्रत्यवनेनिक्ष्व ते मया दीयते तवोपतिष्ठतामिति पिण्डोपरि प्रत्यवनेजनं दद्यात्। ततो नीवीं विस्रस्य सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणहस्तेन गृहीत्वा ॐ एतत्ते पितर्वासः इति पिण्डोपरि धृत्वा मोटकादिकमादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धपिण्डे एतद्वासस्ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत्। ततस्तूष्णीं पिण्डे गन्धपुष्पधूपदीपताम्बूलानि दद्यात्। ततः पिण्डशेषान्नं पिण्डसमीपे विकिरेत्। तत आचान्तस्य ब्राह्मणस्य करे ॐ अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम्। ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु मे इति जलं दद्यात्। ॐ भवन्तु ते ब्राह्मणस्यैतत्प्रतिवचनम्। लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे। लक्ष्मीर्वसति गोष्ठेषु सौमनस्य सदाऽस्तु मे इति पुष्पाणि दद्यात्। ॐ अस्तु सदा तवेति प्रतिवचनम्। अक्षतं चास्तु मे पुण्यं

शान्तिः पुष्टिर्धृतिश्च मे । यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम॥इति तण्डुलान्दद्यात् । ॐ अस्तु सदा तवेति प्रतिवचनम् । अथवा शिवा आपः सन्त्विति जलम्॥सौमनस्यमस्त्विति पुष्पम् ।अक्षतं चारिष्टमस्त्विति तण्डुलान्दद्यात् ।सन्त्विति ॐ अस्त्विति प्रतिवचनम् । ततः पुटकादिपात्रे शान्त्युदकं परिकल्प्य मेदिनीं शिरसाऽभिवन्द्य इमं मन्त्रं पठेत् । ॐ नमो नमो मेदिनि लोकधात्रि उर्व्यै नमः शैलवराग्र्यधारिणि।धरणि काश्यपि जगत्प्रतिभूते वसुधे नमोऽस्तु भुवनैकविधात्रि।नमोऽस्तु ते सर्वरसप्रतिष्ठेनिवापनावीति नमोऽस्तु तेऽधरे॥ततो मोटकादिकमादाय ॐअद्यामुकगोत्रस्य पितुरमुकप्रेतस्य आद्यश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठतामिति विप्रकरे अक्षय्योदकं दद्यात् । ॐउपतिष्ठतामिति प्रतिवचनम्।ततः सव्यं कृत्वा प्राङ्मुखः कृताञ्जलिस्तन्मना सुमनाः दक्षिणां दिशं पश्यन् ॐ अघोरः पितास्त्विति पठेत् । अत्र पूर्वाभिमुखः पिण्डोपरि जलधारां ददातीत्याचारः । ॐ अस्त्विति प्रतिवचनम् ॥ ततः पूर्वाभिमुखं गोत्रं नो वर्धतामिति वदेत् । ॐ वर्द्धतामिति प्रतिवचनम् । दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्तु ॥ अन्नं च नो बहु

भवेद्दतिथींश्च लभेमहि ॥ याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ॥ एताः सत्या आशिषः सन्त्विति आशिषो ब्राह्मणं याचयेत्। सन्त्विति ब्राह्मणप्रतिवचनम् । ततोऽपसव्यं कृत्वा सपवित्र कुशत्रयं पिण्डोपरि दक्षिणाग्रं धृत्वा नमो वाचयिष्य इति पृच्छे । ॐ वाच्यतामित्यनुज्ञातः ॐ पित्रे नम उच्यतामिति वदेत् । ॐ अस्तु नम इति प्रतिवचनम् । ततः पुटकादिस्थितं जलं गृहीत्वा ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयःकीलालं परिस्रुतं स्वधास्थतर्प्पयतमेपितरमिति दक्षिणाग्रां जलधारां सपवित्रकुशोपरि दद्यात्। ततो नम्रीभूय पिण्डमाघ्रायोत्थापयेत् । पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत् । ततोऽर्घपात्रमुत्तानीकृत्य मोटकतिलजलान्यादाय दक्षिणाद्रव्यं चादाय अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कृतैतदाद्यश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति दक्षिणादिदानम् । ॐ स्वस्तीति प्रतिवचनम् । श्राद्धकर्ता पात्र ब्राह्मणस्य चरणौ संवाह्य तं नमस्कुर्यात्। ततो दक्षिणपाणिना पात्रब्राह्मणदक्षिणपाणिं गृहीत्वा शय्यासनमञ्जनं कङ्कतिकां चार्पयेत् । ब्राह्मणश्चाञ्जनं कङ्कतिकां चादाय शय्यामाक्रम्य

मुहूर्तं विश्राम्येत् । ततः सामवेदाध्यायिब्राह्मणास्ताम्रपात्रस्थतिलोदकमुपाहरेयुः । ततः श्राद्ध कर्ता तेन जलेन गृहस्थितं द्रव्यमभिषिञ्चेत् । ततः सव्यं विधाय ॐ अग्निमुखा देवास्तृप्यन्तामिति यवयुतजलेन कुशैः कुशोपरि तर्पयेत् ।अवशिष्टमन्नम् ॐभूतेभ्य एव बलिर्नम इति जलपुष्पाभ्यां बलिं दद्यात्।ततः सामगान् ब्राह्मणान्भोजनादिभिः संतोषयेत्। ततोऽपसव्येन ॐ निरोङ्कारं स्वस्ति ब्रूहीति ब्राह्मणाय वदेत् । स्वस्तीति ब्राह्मणो ब्रूयात् । स्वस्त्यस्तु इत्युक्त्वा ब्राह्मणमुत्थाप्य जलपात्रं गृहीत्वा निमन्त्रणस्थानस्थितं ब्राह्मणम् ॐ आमावाजस्य प्रसवोजगम्यादेमे द्यावापृथिवी विश्वरूपे आमा गन्ताम्पितरामातराचामासोमोऽअमृतत्वेन गम्यादिति पठन् प्रदक्षिणीकुर्वन् वारिधारया त्रिर्वेष्टयित्वा प्रणम्याष्टौ पदान्यनुव्रज्य प्रदक्षिणीकृत्याभिवादयेत् । सव्यं कृत्वा ॐ देवताभ्य इति त्रिर्जपित्वा गृहं प्रविशेत् । पाणिभ्यामपसव्येन श्राद्धीयदीपनिर्वापणम् । सव्यं कृत्वा हस्तौ पादौ प्रक्षाल्याचम्य श्राद्धसंपूर्णकामः ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरिति पठित्वा विष्णुस्मरणं कुर्यात् । ततश्चाशौचान्तद्वितीयदिन एव यथा

शक्ति महार्हाणि रत्नानि गाः वाहनं यानानि दासीं दासं महान्ति वेश्मानि श्रेष्ठभूषणानि प्रेतहित मुद्दिश्य ब्राह्मणाय दद्यात् । तद्यथा--अद्याशौचान्तद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्यस्वर्ग प्राप्तिकामः इमां गां रुद्रदेवताकां यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे इति गां दद्यात् । ॐअद्य कृतैतद्गोदानप्रतिष्ठासिद्ध्यर्थ हिरण्यमग्निदैवत्यं यथानामगोत्राय ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इति यथाशक्ति दक्षिणां च दद्यात् । एवं भूमिहिरण्यादिदानमपि । अस्मिन्दिने दशप्रभृति श्रोत्रियान्भोजयेत् । तान्परितोषयेत् । तत्र दिने विहितमपि पञ्चगव्यपानं शिष्टा नाचरन्ति इति न लिखितम् । अथान्नोदककुम्भदानम् । तत्र एकादशाहश्राद्धं कृत्वा आचम्य प्राङ्मुख उपविश्य कुश तिलजलान्यादाय ॐ पितृगताहरहरन्नोदकुम्भोपस्थितिस्वगताश्वमेधयज्ञजन्यफलप्राप्तिकामोऽद्या दिपितृमरणदिनावधिकाशौचावच्छिन्नदिनोनवत्सरं यावत्प्रत्यहं पित्रे सान्नोदकुम्भदानमहं करिष्ये इति जलपूर्णकुम्भमुपनीय संकल्पं कुर्यात् । ततोऽपसव्यादि कृत्वा मोटकादीन्यादाय ॐ अद्या मुकगोत्र पितरमुक प्रेत इदमासनं ते मया दीयते तवोपतिष्ठतामित्यासनमुत्सृज्य सघृतव्यञ्जनमन्नमु

पनीय ॐ अद्यामुकगोत्र पितरमुकप्रेताय सान्नोदकुम्भस्ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत् । तदुभयं पात्रं ब्राह्मणाय प्रतिपादयेत् । आशौचोपनिपातेऽप्ययं दातव्य इतिसपिण्डने कृते वर्षाभ्यन्तरे । ॐ अद्यामुकगोत्र पितरमुकशर्मन्निदमासनं तुभ्यं स्वधा ॐ अद्यामुकगोत्र पितरमुकशर्मन्नयं सान्नोदकुम्भस्तुभ्यं स्वधेति वदेत् । ततो मोटकादीन्यादाय ॐ अद्य कृतैतत्सान्नोदकुम्भदानप्रतिष्ठार्थमिदं रजतं चन्द्रदैवत्यं यथानामगोत्राय ब्राह्मणाय दक्षिणां च दातुमहमुत्सृजे इति प्रत्यहं सान्नमुदककुम्भं दत्त्वा दक्षिणां च दद्यात् । अत्र द्वादशाहे श्राद्धं कार्यमिति केचित् । तदपि एकादशाहवत् ॥

अथ मासिकश्राद्धप्रयोगः ॥ तत्र श्राद्धपूर्वदिने एकभक्तादिकं विधाय प्रातः श्वेतवस्त्रयुग्मेन स्नात्वा मध्यंदिने पुनः स्नात्वा कृतनित्यक्रिय आचान्त उपविष्टः पूर्वोपकल्पितं प्रज्वलितप्रदीपं स्थापितरक्षोघ्नगौरसर्षपतिलं श्राद्धदेशमागत्य ॐसिद्धमिति पृष्ट्वा कुशत्रयजलेन ॐअपवित्रःपवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥ ॐ पुण्डरीकाक्षः पुनात्वित्युच्चार्य श्राद्धदेयद्रव्याण्यात्मानं च सिञ्चेत् । ॐअद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्तिहेतुकषोडश

श्राद्धान्तर्गतप्रथममासिकश्राद्धमहं करिष्ये इति संकल्पं कुर्यात्। एकादशमासाभ्यन्तरेऽधिमासपाते षोडशपदस्थाने सप्तदशपदं प्रयोज्यम्।ततस्त्रिर्गायत्रीं जपित्वा ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥नमः स्वाहायै स्वधायै नित्यमेव नमो नमः इति त्रिर्जपेत् । ततोऽपसव्यादि कृत्वा मोटकादिक मादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठता मित्यासनमुत्सृजेत्। ॐ अपहताऽअसुरा रक्षाꣳसि वेदिषद इति वामावर्तेन श्राद्धदेशे तिलान्विकिरेत् । तत आयन्तु नः पितर इति मन्त्रं पठेत् । ततः पुटकादौ पवित्रं दक्षिणाग्रं धृत्वा ॐ शन्नो देवीरिति मन्त्रेण तत्र जलं क्षिपेत् ॐ तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः ॥ प्रत्नवद्भिः प्रत्तः स्वधया पितॄँल्लोकान्प्रीणीहि नः स्वाहेति तिलान्प्रक्षिप्य तूष्णीं गन्धपुष्पं च निक्षिपेत्। ततस्तदर्घपात्रं वामहस्ते कृत्वा पवित्रमन्नपात्रोपरि उत्तराग्रं धृत्वा तदुपरि किंचिदुदकान्तरं दत्त्वा ॐ या दिव्याऽआपः पयसा संबभूवुर्याऽआन्तरिक्षाऽउत पार्थिवीर्य्याः ॥ हिरण्यवर्णा यज्ञियास्ता नऽआपः शिवाः शꣳ स्योनाः सुहवा भवन्तु इति पठित्वा दक्षिणहस्तेन मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितर

मुकप्रेत प्रथममासिकश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति पवित्रोपरि जलं दद्यात्। ततः पवित्रादिसहितमर्घमात्रमासनवामपार्श्वे ॐ पित्रे स्थानमसीति न्युब्जीकुर्यात्। पुनर्मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ते मया दीयन्ते तवोपतिष्ठन्तामिति गन्धादिकमुत्सृजेत्। तत आसनस्य भोजनपात्रसहितस्य चतुर्दिशं चतुरस्रं मण्डलं कृत्वा श्राद्धीयान्नाग्रभागं घृतव्यञ्जनतिलयुतं पुटकादौ कृत्वा ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो नम इत्युत्सृजेत्। ततस्ताम्रपात्रादिस्थितमन्नं हस्ताभ्यामादाय मनाक् स्थित्वा पितरं ध्यायन् भोजनपात्रे उपनयेत्। पुरुषतृप्तिक्षममन्नं परिविष्य भूमिष्ठपात्रान्तरेषु व्यञ्जनान्युपकल्प्य पुटकस्थितं घृतं जलं चोपनीय अन्नोपरि हस्तद्वयगृहीतपात्रेण मधु दत्त्वा ततः ॐ मधुव्वाता इत्यादिऋचम् ॐ मधु मधु मध्विति च जपेत्। ततो व्यस्तहस्ताभ्यामन्नपात्रमालभ्य ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृते अमृतं जुहोमि स्वाहा ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पा ँ सुरे। कृष्ण कव्यमिदं रक्ष मदीयमिति पठित्वा वामेन पाणिना पात्रमत्यजन्दक्षिण

हस्ताङ्गुष्ठमन्नजलघृतादिषु ॐ इदमन्नम् ॐ इमा आपः ॐ इदमाज्यम् ॐ इदं कविरिति निक्षिप्य अपहताऽसुरा रक्षा ँ सि वेदिषद इत्यन्नोपरि तिलान्विकीर्य दक्षिणहस्तेन मोदकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठतामित्यु त्सृजेत्। ततो गायत्रीं मधुव्वाता इत्यादि ऋचं मधु मधु मध्विति च जपेत्। अन्नहीनमिति मन्त्रं पठेत्। ततः कुशेषूपविश्य पुनर्गायत्रीं मधुव्वाता इत्यादिऋचं मधु मधु मध्विति च जपेत्। रक्षोघ्न मन्त्रान्कृणुष्वपाज इत्यादिकान् जपेत्। भूमौ तिलान् क्षिप्त्वा पितृमन्त्रपुरुषसूक्ताप्रतिरथादीनि पवित्राणि यथाशक्ति जपेत्। ॐनमस्तुभ्यं विरूपाक्षेति श्लोकमपि च पठेत्। उच्छिष्टसन्निधावास्तृतकुशत्रयीं भूमिं प्रोक्ष्य व्यञ्जनघृततिलयुतमन्नं वारिणाप्लाव्य ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिमिति तदन्नं कुशोपरि विकिरेत्। ततः सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वाऽपसव्यं कृत्वा पिण्डस्थानं निर्माय तन्मध्ये वामहस्तोपेतदक्षिणहस्तगृहीतदर्भपिञ्जुलीमूलेन प्रादेशमात्रमपहतेत्यादिनोल्लिख्य दर्भपिञ्जुलीमुत्तरतस्त्यजेत्। ततो रेखोपरि ॐ ये रूपाणीति

मन्त्रेणाङ्गारं भ्रामयित्वा अङ्गारं दक्षिणतस्त्यजेत् । ततो रेखोपरि उपमूलसकृल्लूनकुशत्रयं दक्षिणाग्रमास्तीर्य सव्येन देवताभ्य इति त्रिर्जपेत् । ततोऽपसव्यं कृत्वा पुटके तिलजलगन्धपुष्पाणि कृत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धपिण्डस्थानेऽत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठतामित्यवनेजनं कुशोपरि दद्यात् । ततस्तिलघृतमधुयुतेनान्नेन पिण्डं कृत्वा घृतमधुभ्यामभिघार्य्य दक्षिणहस्तेन मोटकादीनि चादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे एष पिण्डस्त मया दीयते तवोपतिष्ठतामिति वामजान्वारब्धदक्षिणहस्तेनाऽवनेजनस्थाने पिण्डं दद्यात् । ततो दर्भमूले करं प्रोक्ष्य सव्यं कृत्वाचम्य हरिं स्मृत्वा अपसव्यं कृत्वा दक्षिणाभिमुखः ॐ अत्र पितर्मादयस्व यथाभागमावृषायस्वेति पठेत् । तत उत्तराभिमुखीभूय श्वासं नियम्य पितरं भास्वरमूर्तिं ध्यायन् मुखं पर्य्यावर्त्तयन् अमीमदन्त पिता यथा भागमावृषायिष्टेति पठेत्। ततोऽवनेजनपात्रं दत्तावशिष्टजलयुतं वामहस्ते कृत्वा दक्षिणहस्ते मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धपिण्डेऽत्र प्रत्यवनेनिक्ष्व ते मया

दीयते तवोपतिष्ठतामिति प्रत्यवनेजनं पिण्डोपरि दद्यात् । ततो नीवीं विस्रस्य सव्यं कृत्वाचम्य अप सव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय उभाभ्यां पिण्डोपरि एतत्ते पितर्वास इति सूत्रं धृत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धपिण्डे एतद्वासस्ते मया दीयते तवोपतिष्ठतामिति सूत्रं समुत्सृजेत् । ततस्तूष्णीं गन्धपुष्पादिकं दद्यात् । ततः पिण्ड शेषान्नं पिण्डसमीपे विकिरेत् । ॐ शिवा आपः सन्त्विति जलम् । ॐ सौमनस्यमस्त्विति पुष्पम् । अक्षतं चारिष्टमस्त्विति तण्डुलान् अन्नपात्रोपरि क्षिपेत् । मोटकादीन्यादाय ॐ अद्यामुक गोत्रस्य पितुरमुकप्रेतस्य प्रथममासिकश्राद्धे दात्तैतदन्नपानादिकमुपतिष्ठतामित्यक्षय्योदकं दद्यात् । ततः सव्यं कृत्वा ॐ अघोरः पितास्त्विति दक्षिणां दिशं पश्यन् पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् । ततः पूर्वाभिमुखीभूय ॐ गोत्रं नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदाः संततिरेव चेत्या दिनाऽऽशीःप्रार्थनं कुर्य्यात् । ततोऽपसव्येन पिण्डोपरि सपवित्रान्कुशान्धृत्वा पुटकादिस्थ जलेन ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितरमिति कुशो

परि दक्षिणाग्रां जलधारां दद्यात् । ततः पिण्डमाघ्रायोत्थापयेत् । पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत् । अर्घपात्रमुत्थाप्य मोदकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कृतैतत्प्रथममासिकश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणात्वेन दातुमहमुत्सृजे इति दक्षिणां च दद्यात् । ततः सव्यं कृत्वा ॐ देवताभ्य इति त्रिर्जपेत् । ततोऽपसव्यं कृत्वा पाणिना दीपं निर्वाप्य हस्तौ पादौ प्रक्षाल्य सव्यमाचमनं च कुर्यात् । ॐ प्रमादादिति पठित्वा विष्णुं स्मरेत् । श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत् जले वा क्षिपेत् । प्रायेणाऽपात्रकमेव मासिकश्राद्धं कुर्वन्तीत्यत्रापात्रकप्रयोगो लिखितः। त्रिपक्षश्राद्धमपि कर्तव्यम् । तच्च मासिकवत्। एवमेव द्वितीयमासिकतृतीयमासिकचतुर्थमासिकपञ्चमासिकोनषाण्मासिकषाण्मासिकसप्तममासिकाष्टममासिकनवममासिकदशममासिकैकादशमासिकोनवार्षिकद्वादशमासिकश्राद्धेषु तत्तत्पदप्रक्षेपेण प्रयोग ऊह्यः । अधिमासपाते एकादशमासिकानन्तरं द्वादशमासिकं तत ऊनवार्षिकं ततस्त्रयोदशमासिकं श्राद्धमिति क्रमः । सपात्रकमासिकश्राद्धकरणे ब्राह्मणनिमन्त्रणस्वागतप्रश्नपादार्घदानाऽऽचमनीय

दानब्राह्मणोपवेशनप्रश्नप्रतिवचननमोवाचनब्राह्मणविसर्जनादिविशेष आद्यश्राद्धप्रयोगवदूह्य इति ।
अथ सपिण्डनश्राद्धप्रयोगः। तत्रचाधुनिकाः प्रेतश्राद्धातिरिक्तश्राद्धचतुष्टयमपात्रकमेव कुर्वन्तीति तथैव
लिख्यते। तत्र पूर्वदिने निरामिषमेकवारं भुक्त्वा रात्रौ सर्वभुक्तजनगृहे विप्रनिवेशनं दत्त्वा दक्षिणाप्रवण
गोमयोपलिप्तायां भूमावाचान्त उपविश्य कृतापसव्यः पुष्पचन्दनताम्बूलानि ब्राह्मणकरे दत्त्वा दक्षिण
करेण ब्राह्मणजानु स्पृष्ट्वा ॐ अस्यां रात्रावमुकगोत्रस्य पितुरमुकप्रेतस्य श्वः सपिण्डीकरणश्राद्धकरणाय
भवन्तं ब्राह्मणमामन्त्रये इत्यामन्त्रणं कुर्यात्। ॐ आमन्त्रितोऽस्मीति प्रतिवचनम्। ॐ ततः अक्रोधने
त्यादि ॐसर्वायासविनिर्मुक्तेन कामक्रोधविवर्जितेन भवितव्यं भवता नःश्वस्तने श्राद्धकर्मणीति ब्राह्मणं
नियमान् श्रावयेत्। यद्यविघ्नेन रजनी यास्यति तदा सर्वमेतत्करिष्यामीति तत्प्रतिवचनम्। ततो
ऽग्रिमदिने प्रातः श्वेतवस्त्रयुग्मेन स्नात्वा मध्यन्दिने पुनः स्नात्वा कृतनित्यक्रियः श्राद्धकर्ता श्राद्ध
निषिद्धेतरवेलायां भूमौ कृतपाकस्थाने तिलान्विकीर्य परितश्छागान्बन्धयित्वा सपिण्डद्वारा नूतन
भाण्डैः स्वयं वा पाकमारभेत। श्राद्धभूमिं पञ्चगव्येनोपलिप्य ज्वलदङ्गारैः संशोध्य गौरमृत्तिकया

ऽऽच्छाद्य तिलैः सर्षपैश्च विकिरेत् । द्विजं कारितश्मश्रुनखच्छेदनमभिगम्य दन्तधावनं ताम्रपात्रे तैलो द्वर्तनादीन्युपनीय स्नानार्थं दत्तजलेन स्नातयजमानसवर्णेनाहूतमाचान्तं तं मध्याह्ने शुचिराचान्तः शुक्लद्विवासा उपविश्य गोमयोपलिप्तां भूमिं वामावर्तेन कृतगोमूत्रमण्डलां ॐ भूम्यै नमः इत्यक्षत पुष्पैस्त्रिरर्चयित्वा भूमौ कुशत्रयमास्तीर्य तदुपरि तिष्ठन् ॐ स्वागतमिति ब्राह्मणं पृच्छेत् । ॐ सुस्वाग तमिति तनोक्ते इदं ते पाद्यमित्युपनीय विनीतः सन् पुनः पुनरभिनन्द्य पात्रब्राह्मणपादौ प्रक्षाल येत् । ततः पुटकेऽर्घं कृत्वा दक्षिणाभिमुखोऽपसव्यं कृत्वा मोटकादिकमादायार्घपात्रं वाम हस्ते कृत्वा ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे एष पादार्घस्ते मया दीयते तवोप तिष्ठतामिति पादार्घं दद्यात् । तत आचमनीयं जलं पात्रस्थमभिनीय शिरसाऽभिवन्द्य जानुनी विस्राव्य इदं ते आचमनीयमित्याचमनीयजलं त्रिर्ब्राह्मणाय दत्त्वा स्वयं पादौ प्रक्षाल्याचम्य तमाचमय्याऽग्रे कृत्वा श्राद्धदेशमागच्छेत् । पूर्वरात्रौ निमन्त्रणासंभवे तस्मिन्नेवाह्नि श्राद्धवेलायां पूर्वोक्तविशेषणविशिष्टं यजमानसवर्णेनाहूतं पूर्ववत्कृतगोमूत्रमण्डलायां भूमावुपवेशयेत्स्वयमप्युप

विशेत् । ततः श्राद्धकर्ता इदं ते पाद्यमित्युपनीय विनीतः पुनः पुनरभिनन्द्य पात्रब्राह्मणपादौ प्रक्षालयेत् । ततोऽपसव्यं कृत्वा पुष्पचन्दनताम्बूलानि विप्रकरे दत्त्वा ब्राह्मणजानु दक्षिणहस्तेन स्पृष्ट्वा ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणश्रद्धकरणाय भवन्तं ब्राह्मणमहमामन्त्रये इत्यामन्त्र्य आमन्त्रितोऽस्मीति तेनोक्ते अक्रोधनैनेत्यादिना ॐ सर्वायासविनिर्मुक्तेनेत्यादिना च ब्राह्मणं नियमाञ्श्रावयेत् । भवितव्यमिति तेनोक्ते अर्घं परिकल्प्य वामहस्ते कृत्वा मोटकादिकमादाय अद्यामुकगोत्र पितरमुकप्रेतसपिण्डीकरणश्राद्धे एष पादार्घस्ते मया दीयते तवोपतिष्ठतामिति पादार्घं दद्यात् । तत आचमनीयजलं पात्रस्थं शिरसाऽभिवन्द्य जानुनी विस्राव्य ॐ इदं ते आचमनीयमिति ब्राह्मणाय दत्त्वा सव्येन स्वयं पादौ प्रक्षाल्याचम्य तमाचमय्याग्रे कृत्वा श्राद्धदेशमागच्छेत् । तत्र प्राङ्मुख उपविश्य सिद्धमिति पृष्ट्वा आसनं स्पृष्ट्वाऽत्र निषीदस्वेति ब्राह्मणमुदङ्मुखमुपवेशयेत् । द्विजपादयोस्तले कुशान्दद्यात् । आसनसमीपे तिलतैलेन दीपं प्रज्वाल्य स्थापयेत । अन्यांश्च प्रत्यासनसमीपे तिलतैलेन चतुरो दीपान्स्थापयेत् । ब्राह्म

णेन दीपरक्षा कर्तव्या । रक्षोघ्नान्गौरसर्षपांस्तिलाञ्श्राद्धदेशे सन्निधापयेत् । काककुक्कु टादीञ्श्राद्धहन्तॄनपसारयेत् । ततः ॐ अपवित्रः पवित्रो वेत्यादि पठित्वा ॐ पुण्डरीकाक्षः पुनात्विति श्राद्धीयद्रव्याणि चात्मानं कुशत्रयेण सिञ्चयेत् । ततः कुशत्रयतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्तिहेतुकषोडशश्राद्धान्तर्गतसपिण्डीकरणश्राद्धमहं करिष्ये इति संकल्पं कुर्यात् । ॐ कुरुष्वेति ब्राह्मणो वदेत् । गायत्रीजपमहं करिष्ये इति ब्राह्मणं पृच्छेत् । ॐ कुरुष्वेति तेनानुज्ञातः प्रणवव्याहृतिसहितां गायत्रीं त्रिर्जपेत् । ततो देवताभ्य इति त्रिजपेत् । ततो देवश्राद्धार्थोपकल्पितासनादिदेशमागत्योदङ्मुख उपविश्य कुशत्रययवजलान्यादाय अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकामुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहामुकामुकशर्मणां श्राद्धसम्बन्धिनो विश्वेदेवा इदमासनं वो नमः इति पूर्वाग्रं कुशत्रयरूपं सजलयवप्रोक्षितमुत्सृजेत् । ॐ विश्वेदेवानहमावाहयिष्ये इत्युक्त्वा ॐ विश्वेदेवासऽआगत शृणुतामऽइम ँ हवम् ॥ एदं ब्बर्हिर्न्निषीदतेत्यावाह्य ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति

यवान्विकीर्य ॐ विश्वे देवाः शृणुतेम१ँ हवं मे येऽअन्तरिक्षे यऽउपद्यविष्ठ ॥ ये अग्निजिह्वाऽउत वा यजत्राऽआसद्यास्मिन्बर्हिषि मादयध्वम् ॥ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ॥ ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥ इति पठेत् । ततः पुटके पूर्वाग्रं पवित्रं धृत्वा। ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ॥ शं योरभिस्रवन्तु नः ॥ इति जलं क्षिप्त्वा ॐ यवोऽसीति यवान् प्रक्षिप्य गन्धपुष्पे तूष्णीं तत्र प्रक्षिप्य अर्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे पूर्वाग्रं धृत्वा तदुपरि किञ्चिदुदकान्तरं दत्त्वा या दिव्याऽआपः पयसा सम्बभूवुर्याऽआन्तरिक्षाऽउत पार्थिवीर्याः ॥ हिरण्यवर्णा यज्ञियास्ता नऽआपः शिवाः श१ँ स्योनाः सुहवा भवन्तु इति पठित्वा कुशत्रययवजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्त कामुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहामुकामुकशर्मणां श्राद्धसम्बन्धिनो विश्वेदेवा एष वो हस्तार्घो नमः इति पवित्रोपरि अर्घजलमुत्सृजेत् । ततः पवित्रसहितमर्घपात्रमासनदक्षिणपार्श्वे ॐ विश्वेभ्यो देवेभ्यः स्थानमसीति विश्वेदेवार्घपात्रमुत्तानं स्थापयेत् । ततः कुशत्रययवजलान्यादाय

ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकामुकगोत्रपितामहप्रपितामहवृद्ध प्रपितामहामुकामुकशर्मणां श्राद्धसम्बन्धिनो विश्वेदेवा एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीत वासांसि वो नम इति गन्धादीनुत्सृजेत् । ततो भोजनपात्रासनयोश्चतुर्दिशं जलेन चतुष्कोणमण्डलं कृत्वा अपसव्येन मोटकादिकमादाय तिलघृतव्यञ्जनयुतमन्नम् ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो नम इति दक्षिणमुख उत्सृजेत् ॥ ततः सव्यं कृत्वा ताम्रपात्रादिकं गृहीत्वा तेनान्नमादाय मनाक् स्थित्वा देवान् ध्यायन्पात्रे परिवेविष्यात् । व्यञ्जनानि घृतं जलं च तत्रोपनीयान्नोपरि मधु दत्त्वा ॐमधुव्वाता इति ऋचा ॐमधु मधु मध्विति मन्त्रैरन्नमभिमन्त्रयेत् । ततः ऋजुहस्ताभ्यामन्नपात्रमालभ्य ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽअमृतंजुहोमि स्वाहा ।ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्॥समूढमस्यपाᳪं सुरे॥इति च पठित्वा ॐ कृष्ण कव्यमिदं रक्ष मदीयमिति पठित्वा ॐ इद मन्नमि त्यन्ने ॐ इमा आप इति जले ॐ इदमाज्यमिति घृते ॐ इदं हविरिति पुनरन्ने दक्षिणकराङ्गुष्ठमा वेश्य ॐ यवोऽसीत्यन्नोपरि यवान्निक्षिप्य कुशत्रययवजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुक

प्रेतस्य सपिण्डीकरणनिमित्तकामुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहानाममुकामुकशर्मणां श्राद्ध सम्बन्धिनो विश्वेदेवा एतद्वोऽन्नं सोपकरणं नम इत्यन्नमुत्सृजेत्। एवं देवकाण्डं निर्वर्त्य हस्तौ पादौ प्रक्षाल्य कुशवदुदकादिकं पुनर्गृहीत्वा प्रेतश्राद्धदेशमागत्योपविश्य अपसव्यादि कृत्वा दक्षिणाभि मुखो मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेतसपिण्डीकरणश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठतामिति पित्रे आसनं मोटकरूपं तिलजलप्रोक्षितमुत्सृजेत्। पुनर्मोटकादिकमा दाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्रपितामहामुकश र्मन्निदमासनं ते स्वधा इति स्थानत्रये कृतासनेषु सर्वपश्चिमस्थानस्थितमासनं पितामहायोत्सृजेत्। पुनर्मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुक गोत्र प्रपितामहामुकशर्मन्निदमासनं ते स्वधा इति मध्यममासनं प्रपितामहायोत्सृजेत्। पुनर्मोटका कादिकमादाय ॐअद्यामुकगोत्रस्यपितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्रवृद्धप्रपिता महामुकशर्मन्निदमासनं ते स्वधेति सर्वपूर्वमासनं वृद्धप्रपितामहायोत्सृजेत्। ततः पितामहादीनुद्दिश्य

ॐ पितॄनहमावाहयिष्य इत्युक्त्वा ॐ उशन्तस्त्वानिधीमहि उशँन्तः समिधीमहि ॥ उशन्नुशत ऽआवह पितॄन्हविषेऽअत्तवे इति पितामहादीनावाह्य ॐ अपहता इत्यादि उभयत्र श्राद्धस्थाने तिलान्विकीर्य्य ॐ आयन्तु नः पितर इत्यादिमन्त्रं जपेत् । ततोऽर्घपात्रचतुष्टयेऽनखच्छिन्नं दक्षिणाग्रं पवित्रं प्रत्येकं धृत्वा ॐ शन्नो देवीरिति प्रत्येकं जलं क्षिप्त्वा ॐ तिलोऽसीति स्वाहान्तेन मन्त्रेण प्रत्येकं तेषु तिलान्प्रक्षिप्य गन्धपुष्पे तेष्वेव तूष्णीं प्रक्षिप्य प्रेतार्घपात्रं वामहस्ते कृत्वा पवित्रं पात्रंब्राह्मणकरे उत्तराग्रं धृत्वा तदुपरि किञ्चिज्जलान्तरं दत्त्वा ॐ या दिव्या आपइ ति पठित्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति पात्रब्राह्मणहस्ते पवित्रोपरि अर्घ्यजलं ददद्युत्सृजेत् । अवशिष्टजलसहितार्घ्यपात्रं ब्राह्मणाग्रे निदध्यात् । पितामहार्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि जलान्तरं दत्त्वा ॐ या दिव्या इत्यादि पठित्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्र पितामहामुकशर्म्मन्नेष ते

हस्तार्घ्यः स्वधेति पूर्ववदर्घ्यं दद्यात् । अवशिष्टजलयुतमर्घ्यपात्रमग्रे धारयेत् । ततः प्रपितामहार्घ्य पात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि जलान्तरं दत्त्वा ॐया दिव्या इत्यादि पठित्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्र प्रपितामहामुकशर्मन्नेष ते हस्तार्घ्यः स्वधेत्यर्घ्यं ददत्पूर्ववदुत्सृजेत् । तदर्घ्यपात्रमवशिष्टजलयुतमग्रे स्थापयेत् । तृतीयार्घ्यपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि जलान्तरं दत्त्वा ॐ या दिव्या इति पठित्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरण निमित्तकश्राद्धे अमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नेष ते हस्तार्घ्यः स्वधेति पूर्ववदर्घ्यमुत्सृजेत् । अवशिष्टजलयुतार्घ्यपात्रमग्रे स्थापयेत् ततः सव्यं कृत्वा आचम्य अपसव्यं कृत्वा पुटकत्रयमग्रे धृत्वा प्रेतार्घ्यपात्रं गृहीत्वा ॐ ये समानाः सुमनसः पितरो यमराज्ये ॥ तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् । ये समानाः सुमनसो जीवा जीवेषु मामकाः॥तेषां श्रीर्मयि कल्पतामस्मिँल्लोकेशतं समाः इति मन्त्राभ्यां प्रेतार्घपात्रस्थजलतृतीयभागं पुटकान्तरे धृत्वा पुनरपि मन्त्रद्वयं पठित्वाऽपर

तृतीयभागं पुटकान्तरे धृत्वा प्रेतार्घ्यपात्रस्य तृतीयभागजलं पुटकान्तरे धृत्वा तूष्णीं प्रथमपुटकस्थविभक्तजलतृतीयभागं प्रेतार्घ्यपात्रे कृत्वा पवित्रपुष्पसहितं प्रेतार्घ्यपात्रमादाय ये समाना इति मन्त्रद्वयेन प्रेतार्घ्यपात्रस्थतृतीयभागजलं पितामहार्घ्यपात्रस्थजलेन मेलयेत् । एवमपरपुटकस्थितार्घ्यतृतीयभागद्वयं क्रमेण प्रत्येकं प्रेतार्घ्यपात्रे कृत्वा प्रत्येकं मन्त्रद्वयं पठित्वा प्रपितामहार्घ्यपात्रस्थजलं वृद्धप्रपितामहार्घ्यपात्रस्थजलेन मेलयेत् । ततः प्रेतार्घपात्रं ब्राह्मणवामपार्श्वे पित्रे स्थानमसीति न्युब्जं कृत्वा स्थापयेत्।वृद्धप्रपितामहार्घ्यपात्रस्थजलादिकं प्रपितामहार्घ्यपात्रे कृत्वा तत्सर्वं पितामहार्घ्यपात्रे कृत्वा पितामहार्घ्यपात्रमुत्तानं प्रपितामहार्घ्यपात्रोपरि धृत्वा तद्द्वयमुत्तानं वृद्धप्रपितामहार्घ्यपात्रोपरि धृत्वा पात्रत्रयमेकदैव पितामहासनवामपार्श्वे पितृभ्यः स्थानमसीति न्युब्जं कृत्वा स्थापयेत् । एवं स्थापितमर्घ्यपात्रचतुष्टयं दक्षिणादानपर्यन्तं न चालयेत् । ततो मोटकादिकमादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ते मया दीयन्ते तवोपतिष्ठन्तामिति पित्रे गन्धादीनि दद्यात् । पुनः मोटकादी

न्यादाय । ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्र पिता महामुकशर्मन्नेतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ते स्वधेति पितामहाय गन्धादीन्युत्सृजेत् । एवं पितामहाय वृद्धप्रपितामहाय च गन्धादीन्युत्सृजेद्यथाक्रमेण । ततः पितृब्राह्मणहस्ते स्वहस्तेन एष गन्ध इति चन्दनं निवेदयेत् । ॐ सुगन्धा इति तेनोक्ते ॐ एतानि पुष्पाणीति निवेदयेत् । ॐ सुपुष्पाणीति तेनोक्ते ॐ एष धूप इति निवेद यत् । ॐ सुधूपइ ति तेनोक्ते ॐ एष दीप इति दीपं निवेदयेत् । सुदीप इति तेनोक्ते ॐ इम यज्ञोपवीते इति यज्ञोपवीते निवेदयेत् । ॐ सुयज्ञोपवीतं इति तेनोक्ते ॐ एतानि वासांसीति निवेदिते ॐ सुवासांसीतितेनोक्ते ब्राह्मणाय प्रतिपादयेत् । पुष्पाणि शिखातिरिक्तदेशे न धारयेत् । ततः पात्रब्राह्मणचतुर्दिशं चतुष्कोणं मण्डलं जलेन कुर्यात्। अपरं पितामहादित्रिके चतुष्कोणं मण्डलं कुर्यात् । ततः सव्यं कृत्वा प्राङ्मुख उपविश्य पातितदक्षिण जानुस्ताम्रपात्रादौ व्यञ्जनक्षारवर्जितं सघृतमन्नं कृत्वा पुटकादिस्थजलहस्तेन ॐ अग्नये कव्यवा

१ पितृपात्रेषु वर्तुलं मण्डलं कुर्वन्ति । परंतु पितामहादिषु त्रिचतुष्कोणमण्डलकरणेऽत्राऽऽशयं परिपाटीज्ञा विद्वांस एव विदांकुर्वन्तु।

हनाय स्वाहा ॐ सोमाय पितृमते स्वाहा इत्याहुतिद्वयं तदन्नं च जुहुयात् । ततः अपसव्यं कृत्वाऽवशिष्टमन्नं पितामहादिपात्रे किंचित्किंचिद्दद्यात् । पिण्डार्थं चावशेषयेत् । ततो हस्ताभ्यां ताम्रपात्रमादाय तेनान्नं गृहीत्वा प्रेतपात्रे ध्यायन् परिवेविष्यात् ।पृथक्पुटकादिस्थितानि घृतजलव्यञ्जनानि चोपनयेत् । ततस्तेनैव च क्रमेण पितामहादिपात्रत्रये प्रत्येकमन्नादिपरिवेषणं कुर्यात् । ततः प्रेतपात्रादिस्थितान्नेषु प्रत्येकं मधु दद्यात् । ततः प्रत्येकमभिमन्त्रयेत् । ॐ मधुव्वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्म्मधुमाꣳ२ अस्तु सूर्य्यः । माध्वीर्गावो भवन्तु नः । मधु मधु मध्विति मन्त्रैः । ततः प्रेतान्नपात्रं व्यस्ताभ्यां हस्ताभ्यामालभ्य ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽअमृतं जुहोमि स्वाहा । ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे इति जपित्वा ॐ कृष्ण कव्यमिदं रक्ष मदीयमित्युक्त्वा पात्रब्राह्मणस्य दक्षिणहस्ताङ्गुष्ठं गृहीत्वा ॐ इदमन्नं ॐ इमा आपः ॐ इदमाज्यम् ॐ इदं हविरिति क्रमेणान्नजलघृतादिषु तन्निवेश्य ॐ अपहता

इत्यन्नोपरि प्रचुरतिलान्प्रक्षिप्य मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरण निमित्तकश्राद्धे इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठतामिति पित्रेऽन्नमुत्सृजेत् । अनेनैव क्रमेण पितामहान्नपात्रमालभ्य ॐ पृथिवी ते पात्रमित्यादि पठित्वा ॐ इदमन्नमित्यादिना स्वदक्षिणहस्ता ङ्गुष्ठनिवेशनं कृत्वा ॐ अपहता इत्यादिना तिलानन्ने विकीर्य्य मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्र पितामहामुकशर्म्मन्नेतत्तेऽन्नं सोपकरणं स्वधेति पितामहायान्नमुत्सृजेत् । ततः प्रपितामहान्नपात्रमालभ्य पूर्ववत् ॐ पृथिवी ते पात्र मित्यादिकं सर्वं कृत्वा मोटकादीन्यादाय ॐ अद्यामुगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरण निमित्तकश्राद्धेऽमुकगोत्र प्रपितामहामुकशर्मन्नेतत्तेऽन्नं सोपकरणं स्वधेति प्रपितामहायान्नमुत्सृजेत् । ततो वृद्धप्रपितामहान्नपात्रमालभ्य पूर्ववत् ॐ पृथिवी ते पात्रमित्यादिकं सर्वं कृत्वा मोटकादी न्यादाय ॐ आद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्र वृद्धप्रपिता महामुकशर्मन्नेतत्तेऽन्नं सोपकरणं स्वधेति वृद्धप्रपितामहायान्नमुत्सृजेत् । ततः ॐ भवान् प्राशय

त्विति पात्रब्राह्मणाय जलचुलुकं दत्त्वा सप्रणवव्याहृतिकां गायत्रीम् ॐ मधुव्वाता इत्यादृचम् । ॐ मधु मधु मध्विति जपित्वा ॐ अन्नहीनमित्यादि च पठित्वा ॐ यथासुखं जुषस्वेति पात्रब्राह्मणं प्रति ब्रूयात् । स च ॐ कारपूर्वं वामेन पणिना पात्रमत्यजन् चुलुकं गृहीत्वा भुञ्जीत । हासक्रोधत्वरादिकं न कुर्यात् । श्राद्धकर्ता दर्भेष्वासीनः सप्रणवव्याहृतिकां गायत्रीम् ॐ मधु व्वाता इत्यादृचम् ॐ मधु मधु मध्विति च जपेत् । गायत्रीं ब्राह्मणमनुश्रावयेत् । कृणुष्व पाज इत्यादीन्रक्षोघ्नान्मन्त्रान्पठित्वा भूमिं तिलैरास्तीर्य्य श्राद्धीयब्राह्मणं पितृरूपतया ध्यात्वा ॐ उदीरतामित्यादिपितृमन्त्रान् ॐ सहस्रशीर्षा इत्यादि पुरुषसूक्तम् ॐ आशुः शिशान इत्यादिकमप्रतिरथमन्यानि च शिवसंकल्पप्रभृतीनि पवित्राणि ऋग्यजुस्सामानि रुचिस्तवप्रभृतीनि च यथाशक्ति जपेत् । ॐ नमस्तुभ्यं विरूपाक्ष इति श्लोकमपि पठेत् । वीणाध्वनिभिर्ब्राह्मणं हर्षयन् व्यञ्जनगुणान् इदमन्नमित्यादिक्रमेण कीर्तयन् यत्र यत्रेच्छोपलभ्यते तस्य तत्तदुपनयन् मन्दं मन्दं भोजयेत् । ततस्तृप्तं ब्राह्मणं ज्ञात्वा पितामहपात्रसन्निधावास्तृतदक्षिणाग्रकुशत्रयां भूमिं प्रोक्ष्य सर्वप्रकारकमन्नमादाय सतिलघृतं जलेनाप्लाव्य

ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ॥ भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्॥ इत्यास्तृतकुशोपरि तदन्नं विकिरेत्। ततः सव्यं कृत्वाऽऽचामेत्। हरिंस्मृत्वा अपसव्येन पात्र ब्राह्मणाय ॐइदं ते प्रत्यापोशनमिति जलगण्डूषं दत्त्वा ॐस्वदितमिति पृष्ट्वा ॐसुस्वदितमिति तेनोक्ते ॐ पिण्डमहं करिष्ये इति पृच्छेत्। ॐ कुरुष्वेत्यनुज्ञातः पात्रब्राह्मणायाचमनार्थं पात्र दापयेत्। ततः प्रेतपिण्डदानार्थमेकामपरां पितामहादित्रिकपिण्डदानार्थमेकहस्तमितां चतुरस्रां चतुरङ्गुलोच्छ्रितां दक्षिणप्लवां पिण्डिकां निर्माय तन्मध्ये वामेन पाणिना दर्भपिञ्जलीं गृहीत्वा दक्षिणहस्तेन कृत्वा तन्मूलेन सव्योपगृहीतदक्षिणपाणिना ॐ अपहता इत्यादि पठित्वा दक्षिणाग्रां रेखां प्रादेशप्रमाणां सकृदुल्लिख्य दर्भपिञ्जलीमुत्तरस्यां दिशि क्षिपेत् । एवमेवापरपिण्डिकायामप्येकां रेखां कुर्य्यात्। ततः पूर्वपिण्डिकारेखोपरि ॐ ये रूपाणि प्रतिमुञ्चमानाऽअसुराः सन्तः स्वधया चरन्ति ॥परा पुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकान्प्रणुदात्यस्मादिति मन्त्रेणाङ्गारं भ्रामयित्वा दक्षिणतः क्षिपेत् । एवमेवापररेखायामङ्गारं भ्रामयेत्। तत उभयत्र रेखायामुपमूलसकृल्लूनान्दक्षिणाग्रा

न्कुशान्स्तृणुयात् । ततः सव्यं कृत्वा ॐ देवताभ्य इति त्रिर्जपेत् । ततोऽपसव्यं कृत्वा पुटकचतुष्टये जलतिलगन्धपुष्पाणि क्षिप्त्वा एकं पुटकं वामहस्ते कृत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे पिण्डस्थानेऽत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठतामिति पूर्व पिण्डिकायां छिन्नमूलोपरि अवनेजनं दद्यात् । ततोऽपरं पुटकं वामहस्ते कृत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धपिण्डस्थानेऽमुकगोत्र पितामहामुक शर्मन्नत्राऽवनेनिक्ष्व ते स्वधेति द्वितीयपिण्डिकायामास्तृतकुशमूलसन्निधाने पितामहायावनेजनजलं दद्यात् । ततोऽपरपुटकं वामहस्ते कृत्वा दक्षिणहस्तेन मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डस्थानेऽमुकगोत्र प्रपितामहामुकशर्मन्नत्राऽवनेनिक्ष्व ते स्वधेत्यास्तृतकुशमध्ये प्रपितामहायावनेजनजलं दद्यात् । ततोऽपरं पुटकं वामहस्ते कृत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डस्थानेऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नत्राऽवनेनिक्ष्व तेस्वधेत्यास्तृतकुशाग्रे वृद्धप्रपितामहायावनेजनजलं

दद्यात् ततः सर्वव्यञ्जनतिलजलमध्वाज्यसहितान्नेन प्रेतपिण्डं सर्वव्यञ्जनतिलजलमध्वाज्यहुतशेषान्नेन पिण्डत्रयं च निर्माय चतुरः पिण्डान्मधुघृताभ्यामभिघार्य प्रथमं प्रेतपिण्डं दक्षिणहस्तेन मोटक तिलजलानि चादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठतामिति पूर्वपिण्डिकायां कुशोपरि पित्रे पिण्डं दद्यात्। ततोऽपरपिण्डं मोट कादीनि चादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्र पितामहामुकशर्मन्नेष पिण्डस्ते स्वधेति द्वितीयपिण्डिकायां प्रथमावनेजनस्थाने पितामहाय पिण्डं दद्यात् । पुनर्मोटकादीनि पिण्डं चादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपि ण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्र प्रपितामहामुकशर्मन्नेष ते पिण्डः स्वधेति प्रपितामहायाऽपरावने जनस्थाने पिण्डं दद्यात् । पुनर्मोटकादीनि पिण्डं चादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेत स्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्रवृद्धप्रपितामहामुकशर्मन्नेष ते पिण्डः स्वधेति वृद्धप्रपि तामहायाऽपरावनेजनस्थाने पिण्डं दद्यात् ॥ ततः पितामहादिपिण्डास्तरणकुशमूले ॐ लेपभाग

भुजस्तृप्यन्त्विति करं प्रोक्ष्य सव्यं कृत्वाऽऽचम्य हरिं स्मरेत् ॥ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पितरमुद्दिश्य ॐ अत्र पितर्मादयस्व यथाभागमावृषायस्वेति पठित्वोत्तराभिमुखो भूत्वा श्वासं नियम्य भास्वरमूर्तिं पितरं ध्यायन् मुखं दक्षिणां दिशं प्रत्यावर्तयन् अमीमदन्त पितरो यथाभाग मावृषायिषतेति पठेत् । पितामहादीनुद्दिश्य दक्षिणामुखः । अत्र पितरो मादयध्वं यथाभाग मावृषायध्वमिति पठेत् । उत्तराभिमुखो भूत्वा श्वासं नियम्य तुष्टान्भास्वरमूर्तीन् पितामहादी न्ध्यायन्मुखं दक्षिणां दिशं प्रत्यावर्तयन् ॐ अमीमदन्त पितरो यथाभागमावृषायिषतेति पठेत् ।ततः प्रत्यवनेजनपात्रं वामहस्ते कृत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरण श्राद्धे पिण्डेऽत्र प्रत्यवनेनिक्ष्व ते मया दीयते तवोपतिष्ठतामिति पित्रे प्रत्यवनेजनं दत्त्वा पितामहा वनेजनपात्रं वामहस्ते कृत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डी करणनिमित्तकश्राद्धे पिण्डेऽमुकगोत्र पितामहामुकशर्मन्नत्र प्रत्यवनेनिक्ष्व ते स्वधेति पिताम हाय प्रत्यवनेजनजलं दद्यात् । प्रपितामहावनेजनपात्रं गृहीत्वा मोटकादीन्यादाय ॐ अद्या

मुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डेऽमुकगोत्र प्रपितामहामुकशर्मन्नत्र प्रत्यवनेनिक्ष्व ते स्वधेति प्रपितामहाय प्रत्यवनेजनं दद्यात् । ततोऽवशिष्टं पुटकमादाय मोटकादीनि चादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धपिण्डेऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नत्र प्रत्यवनेनिक्ष्व ते स्वधेति वृद्धप्रपितामहाय प्रत्यवनेजनं दद्यात् । ततो नीवीं विस्रस्य सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा अपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय ॐ एतत्ते पितर्वास इत्युभाभ्यां हस्ताभ्यां पितृपिण्डोपरि सूत्रं धारयेत् । पूर्ववत्पुनः सूत्रमादाय ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्म । ॐ एतद्वः पितरो वास इति मन्त्रं पठित्वा प्रत्येकं पिण्डोपरि सूत्रं धारयेत् । ततो मोटकादीन्यादाय ॐ अद्यामुकगोत्रामुकपितरमुकप्रेत सपिण्डीकरणनिमित्तकश्राद्धे पिण्डेऽमुकगोत्रपितामहामुकशर्मन्नेतत्ते वासः

स्वधेति सूत्रं पितामहायोत्सृजेत् । मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डेऽमुकगोत्र वृद्धप्रपितामहामुकशर्म्मन्नेतत्ते वासः स्वधेति वृद्धप्रपितामहाय सूत्रमुत्सृजेत् । ततः प्रत्येकं पितृपिण्डादिषु गन्धपुष्पधूपदीपताम्बूलानि दद्यात् । ततः पिण्डसमीपे तत्तत्पिण्डशेषान्नं विकिरेत् । ततः पिण्डेषु सूत्रादिकमपनीय हस्तद्वयेन सुवर्णरजत कुशानादाय ॐ ये समाना इत्यादि मन्त्रद्वयं पठित्वा प्रेतपिण्डं त्रिधा विभजेत् । द्विवारं मन्त्र पाठः । ततः प्रथमपिण्डभागमादाय ॐ ये समानाः सुमनसः पितरो यमराज्ये । तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् । ये समानाः सुमनसो जीवा जीवेषु मामकाः । तेषाᳫंश्रीर्मयि कल्पतामस्मिँल्लोके शतᳫंसमाः इति मन्त्रद्वयेन पितामहपिण्डे नियोजयेत् । एवं द्वितीयपिण्डभागमादाय मन्त्रद्वयेन प्रपितामहपिण्डे नियोजयेत् । एवं तृतीयपिण्डभागमादाय मन्त्रद्वयेन वृद्धप्रपितामहपिण्डे नियोजयेत् । ततः प्रेतभागेन सह पिण्डत्रयं प्रत्येकमेकीकृत्य समं वर्तुलं कुर्यात् । ततः प्रेतपूर्वकं पितामहादीनुद्दिश्य पिण्डत्रयेऽर्घ्यपुष्पधूपदीपनैवेद्यताम्बूलानि दद्यात् । ततः सव्येन देवान्न

पात्रे ॐ शिवा आपः सन्तु इति जलं दत्त्वा अपसव्येन पितृब्राह्मणहस्ते पूर्वमन्त्रेण जलं दद्यात्। ॐ सन्त्विति प्रतिवचनम्। ततः पितामहाद्यन्नपात्रेषु प्रत्येकं जलं दद्यात्। अनेनैव क्रमेण ॐ सौमनस्यमस्त्विति देवान्नपात्रे पुष्पम्। ततोऽपसव्येन पितृब्राह्मणहस्ते अनेनैव मन्त्रेण पुष्पम्। ततः पितामहाद्यन्नपात्रत्रिकेऽनेनैव मन्त्रेण प्रत्येकं पुष्पं दद्यात्। ततः सव्येनाक्षतं चारिष्टमस्त्विति देवान्नपात्रे तण्डुलप्रक्षेपः। ततोऽपसव्येन प्रेतश्राद्धपात्रब्राह्मणहस्ते ॐअक्षतं चारिष्टमस्त्विति तण्डुलप्रक्षेपः। ततः ॐअस्त्वितिब्राह्मणप्रतिवचनम्। पितामहाद्यन्नपात्रत्रिकेऽपि प्रत्येकम्। ॐअक्षतं चारिष्टमस्त्विति तण्डुलप्रक्षपः। ततो मोटकादीन्यादाय अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्रस्य पितामहस्यामुकशर्मणो दत्तैतदन्नपानादिकमक्षय्यमस्त्विति पितामहायाक्षय्योदकं दद्यात्। पुनर्मोटकादीन्यादायॐअद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्रस्य प्रपितामहस्यामुकशर्मणो दत्तैतदन्नपानादिकमक्षय्यमस्त्विति प्रपितामहायाक्षय्योदकं दद्यात्। एवं वृद्धप्रपितामहायाक्षय्योदकं दद्यात्। ततः सव्यं कृत्वा कृताञ्जलिस्तन्मनाः सुमना दक्षिणां

दिशं पश्यन् ॐ अघोराः पितरः सन्त्विति पितामहादिपिण्डत्रयोपरि पूर्वाग्रां जलधारां दद्यात् । ॐ सन्त्विति ब्राह्मणप्रतिवचनम् । अत्र वारिधारादानमाचारात् । अन्यथा तु पाठमात्रम् । ततः प्राङ्मुखो गोत्रं नो वर्द्धतामिति पठेत् ॐ वर्द्धतामिति प्रतिवचनम्। दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ॥ श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्तु ॥ अन्नं च नो बहु भवेदतिथींश्च लभेमहि ॥ याचितारश्च नः सन्तु मा च याचिष्म कंचन । एताः सत्या आशिषः सन्त्विति याचेत्। ॐ सन्त्विति प्रतिवचनम् । ततोऽपसव्यं कृत्वा पिण्डोपरि सपवित्रं कुशत्रयं दक्षिणाग्रमास्तीर्य ॐ नमो वाचयिष्ये इति ब्राह्मणं ब्रूयात्। ॐ वाच्यतामित्यनुज्ञातः ॐपित्रे नम उच्यतामिति ब्राह्मणं ब्रूयात्। ॐअस्तु नमः इति ब्राह्मणो वदेत् । ततो वामहस्तोद्धृतं जलपात्रं दक्षिणेनादाय ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्प्पयत मे पितॄनिति पित्रादीनुद्दिश्य सपवित्रकुशोपरि दक्षिणाग्रां जलधारां दद्यात् । ततो नम्रीभूय पिण्डानाघ्रायोत्थापयेत्। पिण्डाधारकुशानुल्मुकञ्च वह्नौ प्रक्षिपेत् । सव्येन देवार्घ्यपात्रं सञ्चाल्य अपसव्येन पित्राद्यर्घ्यपात्राण्युत्तानीकृत्य दक्षिणां दद्यात् । ततः सव्येन

कुशत्रययवजलदक्षिणाद्रव्याण्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तक श्राद्धेऽमुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहानाममुकशर्मणां श्राद्धसम्बन्धिनां विश्वेषां देवानां कृतैतच्छ्राद्धप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां च दातुमह मुत्सृजे इति प्राङ्मुख उत्सृजेत् । ततोऽपसव्यं कृत्वा दक्षिणामुखो मोटकतिलजलान्यादाय दक्षिणां चादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कृतैतत्सपिण्डीकरणनिमित्तकश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणात्वेन च तुभ्यमहं संप्रददे इति दक्षिणां च पितृब्राह्मणकरे दद्यात् ॐ स्वस्तीति प्रतिवचनम् । पुनस्तथैव दक्षिणाद्रव्यादिकमादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कृतसपिण्डीकरणनिमित्तकश्राद्धे कृतैतदमुकशर्मश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां च दातुमह मुत्सृजे इति पितामहश्राद्धदक्षिणां च दद्यात् । पुनर्दक्षिणाद्रव्यादिकमादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे कृतैतदमकगोत्रप्रपितामहामुकशर्मश्राद्धप्रतिष्ठार्थमिदं

रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां च दातुमहमुत्सृजे इति प्रपितामहश्राद्धदक्षिणां च दद्यात्। पुनर्दक्षिणाद्रव्यादिकमादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तक श्राद्धे कृतैतदमुकगोत्रवृद्धप्रपितामहामुकशर्मश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति वृद्धप्रपितामहश्राद्धदक्षिणां च दद्यात्। ततः सव्यं कृत्वा ॐ विश्वेदेवाः प्रीयन्तामिति देवविसर्जनं कृत्वा अपसव्यं कृत्वा पितृश्राद्धब्राह्मणम् ॐ निरोङ्कारं स्वस्ति ब्रूहीति वदेत्। स्वस्तीति तेनोक्ते स्वस्त्यस्तु इति पितृब्राह्मणं विसृज्य गृहीतपितृब्राह्मणा ङ्गुष्ठो गृहीतोदकपात्रो बहिर्निमन्त्रणस्थानमागत्य ब्राह्मणं स्थापयित्वा ॐ आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे। आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात्॥ इति प्रदक्षिणीकुर्वन् पूर्ववदुदकधारया त्रिर्वेष्टयेत्। ततः प्रणम्याष्टौ पादाननुव्रज्य प्रदक्षिणीकृत्या भिवादयेत्। ततः सव्यं कृत्वा ॐ देवताभ्य इति त्रिर्जपेत्। ततो गृहं प्रविश्य सव्यापसव्याभ्यां देव पितृश्राद्धदीपान्पाणिभ्यां निर्वापयेत्। ततः सव्येन पाणिपादप्रक्षालनमाचमनं च कुर्यात्। ततः

ॐ प्रमादादित्यादि पठित्वा एतत्फलकामो विष्णुं स्मरेत् । अपरश्राद्धचतुष्टयद्रव्यप्रतिपत्तिं ब्राह्म
णाय कुर्यात् । पिण्डाञ्जले प्रतिपादयेत् । उच्छिष्टमार्जनं कुर्यात् । वैश्वदेवबल्यनन्तरं दशप्रभृति
श्रोत्रियान्यथाशक्ति भोजयेत् । ज्ञातिभिर्मिलित्वा सह भुञ्ज्यात् ॥ इति श्राद्धविवेके सपिण्डन
पद्धतिः ॥ सपिण्डीकरणकालव्यवस्था ॥ वत्सराभ्यन्तरे चैतानि षोडश श्राद्धानि केनचिद्विस्मरणा
दिना न कृतानि तेन कृष्णैकादश्यां तन्मृताहे वा षोडश श्राद्धानि कर्तव्यानीति मिताक्षराश्राद्धपल्लवयो
र्लिखितम् । युक्तं चैतत् । एकोद्दिष्टरूपश्राद्धस्य कृष्णैकादश्यां विधानात् एषां चैकोद्दिष्टरूपत्वात् ।
अथ चाधिकारिणि कृतषोडशश्राद्धसंकल्पे सपिण्डनमकृत्वा विपन्ने कनिष्ठेनावशिष्टश्राद्धानि कार्या
णीति श्राद्धप्रदीपः । एषु सर्वेषु प्रेतश्राद्धादिषु शेषान्नभोजनं न कर्तव्यम् । यदाह देवलः—
एकोद्दिष्टस्य शेषं तु ब्राह्मणाय समुत्सृजेत् । ततः परं तु भुञ्जीत स्वयं मङ्गलभोजनम् ॥ अस्यार्थः—
प्रेतश्राद्धार्थं यत्किंचित्साधितमोदनादि तत्सर्वं ब्राह्मणायैव प्रतिपादयेत् । नोद्धारयेत् स्वयं मङ्गल
भोजनं कुर्य्यात् । पृथक्पाकसाधितान्नभोजनं कुर्यात् । पृथक्पाकस्य मङ्गलस्वरूपत्वात् । सपि

ण्डने पितामहादिश्राद्धशेषान्नस्यैव पाकसाधितत्वात्प्रतश्राद्धशेषान्नत्वादेव त्यागः । सपिण्ड नानन्तरं वर्षद्वयं यावत् श्राद्धदत्तशेषान्नस्यापि भोजनं न कर्तव्यम् ॥ तथा च श्राद्धान्न भोजननिषेधे शातातपः—नवश्राद्धं ग्रामयाजकान्नं सग्रहभोजनम् ॥ नारीणां प्रथमे गर्भे भुक्त्वा चान्द्रायणं चरेत् ॥ चान्द्रायणं नवश्राद्धे पराको मासिके ततः ॥ मासत्रयेऽतिकृच्छ्रः स्यात्षण्मासे कृच्छ्र एव हि । आब्दिके कृच्छ्रपादः स्यादेकाहः पुनराब्दिके ॥ अत ऊर्द्ध्वं न दोषः स्याच्छङ्खस्य वचनं यथा ॥ अत्र नवश्राद्धमेकादशाहश्राद्धम् ।ग्रामयाजकान्नं प्रसिद्धमेव । सग्रहभोजनं चन्द्र सूर्ययोरुपरागकाले भोजनम् । नारीणां प्रथमगर्भसंस्कारभोजनम् । आब्दिके प्रथमसांवत्सरिके पुनराब्दिके द्वितीयसांवत्सरिके तदुपकरणवस्त्रादिग्रहणं वर्षद्वयेऽपि कुर्वन्तीति सदाचारः । स्त्रीशूद्र कर्तृकेऽस्मिञ्श्राद्धे स्वधापदस्थाने नमःपदप्रयोगः कर्तव्यः । स्त्रियाः सपिण्डने जीवति पत्यौ श्वश्र्वादिभिः सपिण्डनं कार्यम् । मृते पत्यौ पतिश्वशुरादिभिः सह मेलनं कार्यम् । पतिपुत्ररहिताया सपिण्डनमेव निषिद्धम् । तथा च मार्कण्डेयपुराणम्—सपिण्डीकरणं तासां पुत्राभावे न विद्यते ।

अत्र पुत्राभाव इत्युपलक्षणं पतिपुत्राभावे इत्यस्येति द्रष्टव्यम् । पतिकर्तृकस्य स्त्रीसपिण्डनस्य विधानात् । एवं सपत्नीपुत्रे विद्यमाने स्त्रियाः सपिण्डनं भवति । बह्वीनामेकपत्नीनां यद्येका पुत्रिणी भवेत् । सर्वास्तेनैव पुत्रेण पुत्रिण्यो मनुरब्रवीत् इति ॥ सपत्नीपुत्रवत्तया पुत्रिणीत्वातिदेशेनापुत्रत्वाभावात् । एवं त्रैवर्णिकजातस्य शूद्रस्य सपिण्डनं निषिद्धम् । नीयते तु सपिण्डत्वं येषां शूद्रकुलोद्भवे ॥ सर्वे शूद्रत्वमायान्ति यदि स्वर्गजितोऽपि त इति ॥ शङ्खलिखितवाक्यात् । यत्र च सपिण्डनं निषिद्धं तत्र ब्रह्मपुराणोक्तषोडशश्राद्धैः प्रेतत्वविमुक्तिः । तथा च ब्रह्मपुराणे—नृणां तु त्यक्तदेहानां श्राद्धं षोडशसङ्ख्यया ॥ चतुर्थे पञ्चमे चैव नवमैकादशे तथा ॥ ततो द्वादशभिर्मासैः श्राद्धं द्वादशसङ्ख्यया ॥ कर्त्तव्यं शुचिभिस्तेषां ततो विप्रांश्च भोजयेत् ॥ इति । अत्र च मृतकार्येषु मरणदिनावधिकदिनमासादिगणनाच्चतुर्थदिनादित्वं मरणदिनावधिकमेव ज्ञेयम् । तथा चाशौचाभ्यन्तरेऽपि चतुर्थदिनादिषु श्राद्धं कर्तव्यम् । अत्र च वर्षं यावत्सपिण्डनकालेषु निषिद्धनक्षत्रसंभव निषिद्धनक्षत्रे सपिण्डननिषेधात् तत्रापि ब्रह्मपुराणीयषोडशश्राद्धानि कर्तव्यानीति बहुषु निबन्धेषु

लिखितम्। लोकास्तु निषिद्धनक्षत्रेऽपि सपिण्डीकरणे पित्रादिगतकुले दोषाभावात्स्वमात्रगतानिष्टसंभ
वान्नक्षत्रानुरोधं नाचरन्ति ॥ अवीरायाः सपिण्डकर्तृकषोडशश्राद्धविधिर्लिख्यते । तत्र सपिण्डे
नाशौचाभ्यन्तर एव चतुर्थदिने श्राद्धं कर्तव्यम् ॥ तत्र प्रथमतोऽस्थिसञ्चयनिमित्तकमेकोद्दिष्टं कृत्वा
ऽस्थिसञ्चये कृते पुनः स्नात्वा श्राद्धं कर्तव्यम् । तत्र मध्याह्ने शुचिराचान्तो यजमानसवर्णेनाहूतं
ब्राह्मणं स्नातमाचान्तं गोमयोपलिप्तायां मण्डपाद्बहिर्भूमौ गोमूत्रेणापसव्यवत्कृतमण्डलायाम् ॐ
भूम्यै नमः इति त्रिरक्षतपुष्पपूजितायामास्तृतदक्षिणाग्रकुशत्रयायां तिष्ठन् स्वागतमिति पृच्छेत्।
सुस्वागतमिति तेनोक्ते उभावप्युपविशतः। ततः पुटके जलं कृत्वा इदं ते पाद्यमित्यप आनीय पात्र
ब्राह्मणपादयोदद्यात् । ततोऽपसव्यं कृत्वा पुष्पचन्दनताम्बूलानि ब्राह्मणाय दत्त्वा ब्राह्मणं दक्षिण
करेण स्पृष्ट्वा ॐ अद्यामुकगोत्रायाः सपिण्डाया अमुकप्रेतायाश्चतुर्थदिनश्राद्धकरणाय भवन्तं ब्राह्म
णमहमामन्त्रये इत्युक्ते ॐ आमन्त्रितोऽस्मीति प्रतिवचनम्। ॐ अक्रोधनेनेत्यादिना ॐ सर्वायास
विनिर्मुक्तेनेत्यादिना च नियमाञ्श्रावयेत् । ॐ भवितव्यमिति तेनोक्ते जलतिलगन्धपुष्पाणि

पुटके कृत्वा ॐ अद्यामुकगोत्रेसपिण्डेऽमुकप्रेते चतुर्थदिनश्राद्धे इदं पादार्घ्यं ते मया दीयते तवोप
तिष्ठतामिति मोटकादिना पादार्घ्यं दद्यात् । तत आचमनीयजलं नमस्कृत्य जानुनी विस्राव्य इदं ते
आचमनीयमित्याचनीयं समर्पयेत् । ततः सव्येन स्वयमाचम्य तमाचमय्याग्रे कृत्वा श्राद्धदेशमाग
च्छेत् । तत्र प्राङ्मुख उपविशेत् । ॐ सिद्धमिति वदेत् । तत्रासनेऽत्रास्स्वेति ब्राह्मणमङ्गुष्ठेन गृहीत्वा
सकुशे आसने उत्तराभिमुखमुपवेशयेत । पादयोस्तले दक्षिणाग्रं कुशत्रयं दद्यात् । आसनसमीपे तु
तिलतैलेन रक्षादीपं स्थापयेत् । ततः ॐ अपवित्र इत्यादि पठित्वा ॐ पुण्डरीकाक्षः पुनात्विति
कुशत्रयजलेन सर्वाणि श्राद्धीयद्रव्याणि सिञ्चेत् । ततः कुशत्रयतिलजलान्यादाय ॐ अद्या
मुकगोत्रायाः सपिण्डाया अमुकप्रेतायाः प्रेतत्वविमुक्तिकामः अद्यादि यथाकालं षोडशश्राद्धान्यहं
करिष्ये इति संकल्पयेत् । पुनः कुशत्रयतिलजलान्यादाय ॐ अद्यामुकगोत्रायाः सपिण्डाया अमुक
प्रेतायाः प्रेतत्वविमुक्तिहेतुकषोडशश्राद्धान्तर्गतचतुर्थदिनश्राद्धमहं करिष्ये इति वदेत् । ॐ कुरुष्वेति
प्रतिवचनम् । ॐ गायत्रीजपमहं करिष्ये० ॐ कुरुष्वेति तत्प्रतिवचनम् । ततः सप्रणवव्याहृतिगायत्रीं

त्रिर्जपित्वा ॐ देवताभ्य इति त्रिर्जपेत्। ततोऽपसव्यं कृत्वा मोटकादीन्यादाय अद्याऽमुकगोत्रे सपिण्डे अमुकप्रेते चतुर्थदिनश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठतामित्यासनमुत्सृजेत् । ततः ॐअपहता इत्यादिना श्राद्धदेशे वामावर्तेन तिलान्विकिरेत् । तत आयन्तु न इति जपेत् । ततोऽर्घ्य पात्रे पवित्रं कृत्वा ॐ शन्नो देवीरिति जलं तिलोऽसीति स्वाहान्तेन तिलान् क्षिप्त्वा तूष्णीं गन्ध पुष्पे क्षिपेत् । ततोऽर्घपात्रं वामहस्ते कृत्वा पवित्रं पात्रब्राह्मणकरे उत्तराग्रं कृत्वा तदुपरि उदका न्तरं दत्त्वा ॐ या दिव्या इति पठित्वा मोटकादीन्यादाय ॐअद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थ दिनश्राद्धे इदं हस्तार्घ्यं ते मया दीयते तवोपतिष्ठतामिति विप्रकरे अर्घ्यजलं दद्दुत्सृजेत् । ततस्त दर्घ्यपात्रं पवित्रसहितं ब्राह्मणवामपार्श्वे सपिण्डायै स्थानमसीति न्युब्जीकरणम् । ततो मोटका दीन्यादाय ॐअद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थदिनश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलसिन्दूर वासांसि ते मया दीयन्ते तवोपतिष्ठन्तामिति गन्धादीनुत्सृजेत् । ततः पात्रस्य चतुर्दिशं चतुष्कोणं मण्डलं कुर्यात् । ततः श्राद्धीयान्नव्यञ्जनाग्रभागं गृहीत्वा घृततिलजलसहितं तदन्नम् इदमन्नमेतद्भूस्वामि

पितृभ्यो नम इति मोटकादिना दद्यात् । ततः कराभ्यां ताम्रपात्रमादाय तेनान्नं गृहीत्वा मना क्स्थित्वा सपिण्डां ध्यात्वा भोजनपात्रे पुरुषतृप्तिक्षममन्नं परिवेविष्यात् । पुटकान्तरेषु व्यञ्जनानि घृतं जलं चोपनीय अन्नोपरि पुटकादिना हस्ताभ्यां मधु दद्यात् । ॐ मधुव्वाता ऋतायते इति ऋचं मधु मधु मध्विति च जपेत् । ततो व्यस्तानुत्तानपाणिभ्यामन्नपात्रमालभ्य ॐ पृथिवी ते पात्र मित्यादि जपित्वा इदं विष्णुरिति पठन्नमृतरूपतयाऽन्नं विचिन्त्य ॐ कृष्ण कव्यमिति पठित्वा ॐ इदमन्नम् ॐ इमा आपः ॐ इदमाज्यम् ॐ इदं हविरिति पात्रब्राह्मणदक्षिणहस्ताङ्गुष्ठमन्नजलघृता दिषु निवेश्य ॐ अपहता इत्यादिनाऽन्नोपरि बहूंस्तिलान्विकीर्य वामेन पाणिना पात्रमत्यजन् ॐ अद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थदिनश्राद्धे इदमन्नं सोपकरणं ते मया दीयते तवोतिष्ठ तामित्यन्नमुत्सृजेत् । ॐ भवान्प्राश्नात्विति ब्राह्मणाय जलगण्डूषं दद्यात् । ततो गायत्रीं मधु व्वाता इत्यादिऋचम् ॐ मधु मधु मध्विति च जपित्वा ॐ अन्नहीनमित्यादि पठित्वा ॐ यथा सुखं जुषस्वेति ब्राह्मणं ब्रूयात् । ब्राह्मणो वामेन पाणिना पात्रमत्यजन् ॐकारपूर्वकं भुञ्जीत ।

त्वराक्रोधादिकं वर्जयेत् । व्यञ्जनाद्यर्थं हस्तादिना संज्ञामपि न कुर्यात् । श्राद्धकर्ता दर्भेष्वासीनो गायत्रीं मधुव्वातादिकं जपेत् । ब्राह्मणं गायत्रीमनुश्रावयेत् । ॐ कृणुष्व पाज इत्यादिरक्षोघ्न मन्त्रान्पठेत् । भूमौ तिलान्विकीर्य्य ब्राह्मणं सपिण्डरूपतया ध्यायेत् । ॐ उदीरतामित्यादि मन्त्रान् ॐ सहस्रशीर्षा इत्यादि पुरुषसूक्तम् ॐ आशुःशिशान इत्यादिकमप्रतिरथमन्यानि च शतरुद्रीयरुचिस्तवप्रभृतीनि पवित्राणि जपेत् । ततः ॐ नमस्तुभ्यं विरूपाक्षेत्यादि श्लोकमपि पठेत् । वीणादिभिः ब्राह्मणं हर्षयेत् । व्यञ्जनगुणाननुत्कीर्तयन्मन्दं मन्दमुपनयन् ब्राह्मणं भोजयेत् । ततस्तं तृप्तं ज्ञात्वा उच्छिष्टसन्निधावास्तृतदक्षिणाग्रकुशत्रयां भूमिं प्रोक्ष्य मधुतिलघृतव्यञ्जनयुतमन्नं जलेनाप्लाव्य ॐ अनग्निदग्धा इति मन्त्रेण कुशोपरि अन्नं विकिरेत् । ततः सव्यं कृत्वाऽऽचम्य विष्णुं स्मरेत् । अपसव्यं कृत्वा इदं ते प्रत्यापोशनमिति जलगण्डूषं ब्राह्मणाय दत्त्वा ॐ स्वदितमिति पृच्छेत् । ॐ सुस्वदितमिति तेनोक्ते ॐ पिण्डमहं करिष्ये इति पृच्छेत् । ॐ कुरुष्वेत्यनुज्ञातो हस्तमात्रपरिमितां पिण्डिकां मृत्तिकामयीं निर्माय तन्मध्ये प्रादेशमितां रेखां वामेन पाणिना

दर्भपिञ्जलीमादाय हस्ताभ्यां गृहीत्वा तन्मूलेन दक्षिणाग्ररेखां कुर्यात् । दर्भपिञ्जलीमुत्तरस्यां दिशि क्षिपेत् । ये रूपाणीति तत्राङ्गारभ्रामणं कृत्वाऽङ्गारं दक्षिणस्यां दिशि क्षिपेत् । रेखोपरि उपमूलसकृल्लूनान् कुशान् दक्षिणाग्रानास्तीर्य सव्यं कृत्वा ॐ देवताभ्य इति त्रिर्जपेत् । अपसव्यं कृत्वा जलतिलगन्धपुष्पाणि पुटके कृत्वा वामहस्तेन तमादाय दक्षिणहस्तेन मोटकादीन्यादाय ॐ अद्यामुकगोत्र सपिण्डेऽमुकप्रेत चतुर्थदिनश्राद्धे पिण्डस्थानेऽत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठतामिति कुशमध्येऽवनेजनं दद्यात् । ततो मोटकादीन्यादाय पिण्डं चादाय ॐ अद्यामुकगोत्र सपिण्डेऽमुकप्रेत चतुर्थदिनश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठतामिति कुशमध्ये पिण्डं दद्यात् । तत आस्तृतकुशमूले करं प्रोक्ष्य सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा ॐ अत्र सपिण्डे मादयस्व यथाभागमावृषायस्वेति दक्षिणामुखः पठेत् । तत उदङ्मुखीभूय श्वासं नियम्य भास्वरमूर्तिं ध्यायन् ॐ अमीमदन्त सपिण्डे यथाभागमावृषायिष्टेति पठन् मुखं प्रत्यावर्तयेत् । मोटकादीन्यादाय वामहस्तेऽवनेजनपुटकं धृत्वा ॐ अद्यामुकगोत्र सपिण्डेऽमुकप्रेत चतुर्थदिनश्राद्धेऽत्र प्रत्यवनेनिक्ष्व ते

मया दीयते तवोपतिष्ठतामिति पिण्डोपरि प्रत्यवनेजनं दद्यात् । ततो नीवीं विस्रस्य परिधाय सव्यं कृत्वाऽऽचामेत् । अपसव्यं कृत्वा वामेन पाणिनोद्धृतं सूत्रं दक्षिणेनादाय ॐ एतत्ते सपिण्डे वास इति पिण्डोपरि हस्ताभ्यां दद्यात् । मोटकादीन्यादाय ॐ अद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थ दिनश्राद्धे पिण्डे एतद्वासस्ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत् । ततो गन्धपुष्पधूपदीपताम्बूलैः पिण्डमर्च्चयेत् । पिण्डशेषान्नं पिण्डसमीपे विकिरेत् । ॐ शिवा आपः सन्त्विति आचान्तब्राह्मणकरे जलदानम् । ॐ सौमनस्यमस्त्विति पुष्पम् । ॐ अस्त्विति प्रतिवचनम् । ॐ अक्षतं चारिष्टम स्त्विति तण्डुलदानम् । ॐ अस्त्विति प्रतिवचनम् । मोटकादीन्यादाय ॐ अद्यामुकगोत्रायाः सपिण्डाया अमुकप्रेतायाश्चतुर्थदिनश्राद्धे दत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामित्यक्षय्योदकदानं ब्राह्मणकरे दद्यात् । ॐ उपतिष्ठतामिति प्रतिवचनम् । ततः सव्यं कृत्वा सुमनास्तन्मना दक्षिणां दिशं पश्यन् ॐ अघोरा सपिण्डाऽस्त्विति पूर्वाग्रां जलधारां दद्यात् । अस्त्विति प्रतिवचनम् । पूर्वाभिमुखो भूत्वा ॐ गोत्रं नो वर्द्धतामित्याशिषं ब्राह्मणं याचेत । ॐ वर्द्धतामिति तेनोक्ते ॐ

दातारो नोऽभिवर्द्धन्तामित्यादिनाऽऽशीःप्रार्थनम् । ॐ सन्त्विति प्रतिवचनम् । अपसव्यं कृत्वा पिण्डोपरि सपवित्रकुशानास्तीर्य दक्षिणाग्रान् ॐ नमो वाचयिष्ये इति ब्राह्मणं ब्रूयात् । ॐ वाच्य तामित्युक्ते ॐ सपिण्डायै नम उच्यतामिति वदेत् । ॐ अस्तु नम इत्युक्ते पुटकादिस्थितं जलं हस्ताभ्यामादाय ॐ ऊर्ज्जं वहन्तीरिति मन्त्रेण सपवित्रकुशोपरि दक्षिणाग्रां वारिधारां दद्यात् । ततो नम्रीभूय पिण्डमाघ्रायोत्थापयेत् । पिण्डाधारकुशानुल्मुकं च वह्नौ निक्षिपेत् । अर्घ्यपात्र मुत्तानीकृत्य मोटकादिकं दक्षिणाद्रव्यं चादाय ॐ अद्यामुकगोत्रायाः सपिण्डाया अमुकप्रेतायाः कृतैतच्चतुर्थदिनश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणा त्वेन तुभ्यमहं सम्प्रदद इति दद्यात् । ॐ निरोङ्कारं स्वस्ति ब्रूहीति ब्राह्मणं वदेत् । स्वस्तीति ब्राह्मणेनोक्ते स्वस्त्यस्तु इत्युक्त्वा ब्राह्मणहस्ताङ्गुष्ठं गृहीत्वोत्थापयेत् । तं गृहीत्वा जलपात्रं च गृहीत्वा निमन्त्रणस्थाने स्थापयेत् ॐ आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे । आ मा गन्तां पितरा मातरा चा मा सोमोऽमृतत्वेन गम्यात् ॥ इति

मन्त्रेण वारिधारया ब्राह्मणं त्रिर्वेष्टयेत्। प्रणम्याष्टौ पादाननुव्रज्य प्रदक्षिणीकृत्य नमस्कुर्यात्। तत उपविश्य तत्रैव सव्यं देवताभ्य इति त्रिर्जपेत्। ततः श्राद्धदेशमागत्य पाणिभ्यां दीपं निर्वाप्य सव्यं कृत्वा हस्तौ पादौ प्रक्षाल्याऽऽचम्य ततः ॐ प्रमादादित्यादि पठित्वा श्राद्धपूर्तिकामो विष्णुं स्मरेत्। पिण्डादिकं जले क्षिपेत्। उच्छिष्टापनयनं कुर्यात्। दशप्रभृतिश्रोत्रियान्भोजयेत्। बन्धुभिर्मिलित्वा स्वयं भुञ्जीत। अनेनैव प्रकारेण पञ्चमदिने पञ्चमदिनश्राद्धं नवमदिने नवमदिनश्राद्धमेकादशाहे एकादशदिनश्राद्धं कुर्यात्। चतुर्थदिने विगोत्रो यदि श्राद्धकर्ता तदा तस्याशौचान्तद्वितीयदिनत्वात्तत्र शय्यादानकाञ्चनपुरुषदानदम्पतिपूजनवृषोत्सर्गकपिलादानानि कुर्यात्। सपिण्डो यदि श्राद्धकर्ता तदा तेनैकादशाहे आशौचान्तद्वितीयदिने शय्यादानं दम्पतिपूजनं वृषोत्सर्गादिकं च कर्त्तव्यम्। अनेनैव प्रकारेण प्रथममासमारभ्य द्वादशमासपर्यन्तं प्रतिमासशेषे सति क्षयाहे प्रथममासिकद्वितीयमासिकतृतीयमासिकचतुर्थमासिकपञ्चममासिकषष्ठमासिकसप्तममासिकाऽष्टममासिकनवममासिकदशममासिकैकादशमासिकद्वादशमासिकानि कर्तव्यानि। अधिकमाससंभवे

त्रयोदश मासिकानि कर्तव्यानि । अस्मिन्ब्रह्मपुराणीयकल्पे मासिकानामपकृष्य करणं भवति । प्रमाणाभावादिति ॥ इति श्राद्धविवेके मध्यमक्रियापरिच्छेदस्तृतीयः ॥ ३ ॥ छ ॥ अथापात्रकै कोद्दिष्टश्राद्धप्रयोगः ॥ तत्र पूर्वदिने कृतनियमः श्राद्धदिने प्रातर्वस्त्रयुग्मेन कृतस्नानः पञ्चगव्यो पलेपनज्वलदङ्गारभ्रामणगौरमृत्तिकाच्छादनैः श्राद्धभूमिसंस्कारं कृत्वा वस्त्रादिना वेष्टयित्वा तिल गौरसर्षपैरवकीर्य्य पित्रासनस्थानाद्वामभागे श्राद्धेदयवस्तून्यासाद्य कृतस्नानादिर्मध्याह्ने शुचिः शुक्ल द्विवासाः पादौ प्रक्षाल्याचम्य श्राद्धदेशमागच्छेत् । तत्र स्वयं पाकं कुर्यात् । सपिण्डस्त्रीद्वारा वा पाचयेत् । ततः पाके वृत्ते रक्षादीपं निधाय पुनराचम्य प्राङ्मुख उपविशेत् । अन्यकृते पाके सिद्धमिति पृष्ट्वा ॐ अपवित्रः पवित्रो वेत्यादि ॐ पुण्डरीकाक्षः पुनात्विति पठित्वा कुशत्रयजलैः श्राद्धवस्तून्यभिषिञ्चेत् । ततः कुशत्रयतिलजलान्यादाय ॐ अद्यामुकमासीयामुकपक्षीयामुक तिथौ अमुकगोत्रस्य पितुरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धमहं करिष्ये इति संकल्पं कुर्यात् । ततो गायत्रीं त्रिर्जपित्वा ॐ देवताभ्य इत्यादि त्रिर्जपेत् । ततोऽपसव्यं कृत्वा दक्षिणामुखः पातित

वामजानुः मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धे इद
मासनं ते स्वधेति पूर्वोपकल्पितं मोटकरूपमासनं तिलजलप्रोक्षितं दक्षिणाग्रं पितृतीर्थेनोत्सृजेत् ।
ॐ अपहतेत्यादिना भोजनपात्रे तिलान्विकीर्य्य ॐ आयन्तु न इत्यादि पठित्वाऽर्घ्यकरणम् ।
पुटकादौ दक्षिणाग्रं पवित्रं धृत्वा ॐ शन्नो देवीरिति मन्त्रेण जलं प्रक्षिप्य ॐ तिलोऽसीति तिला
न्प्रक्षिप्य गन्धपुष्पे तूष्णीं क्षिपेत् । ततोऽर्घपात्रं वामहस्ते कृत्वा भोजनपात्रे पवित्रमुत्तराग्रं
धृत्वा तदुपरि उदकान्तरं दत्त्वा ॐ या दिव्या इति पठित्वा अद्यामुकगोत्र पितरमुकशर्मन्
सांवत्सरिकैकोद्दिष्टश्राद्धे इदं हस्तार्घ्यं स्वधेति पवित्रोपरि जलं यथापतितमेवमुत्सृजेत् ।
ततः पवित्रयुतं तदर्घ्यपात्रमवशिष्टजलयुतमेवासनवामभागे ॐ पित्रे स्थानमसीतिन्युब्जीकुर्यात् ।
दक्षिणादानपर्यन्तं नोद्धरेत् न चालयेत् । ततो गन्धादि दद्यात् । ततो मोटकतिलजला
न्यादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे एतानि गन्धपुष्पधूप
दीपताम्बूलयज्ञोपवीतवासांसि ते स्वधेति गन्धादीन्दद्यात् । ततो जलेन भोजनपात्रासनयो

श्चतुर्दिशं मण्डलं कृत्वा सव्यञ्जनं सघृततिलजलमन्नं किंचिदग्रभागमुद्धृत्य मोटकादिना ॐ इद मन्नमेतद्भूस्वामिपितृभ्यो नमः इति भूस्वामिनेऽन्नं दद्यात् । ततः सिद्धमुष्णमन्नं रजतादिपात्रस्थं कराभ्यामादाय पितरं ध्यायन्मन्दं मन्दं परिवेषणं कुर्यात् । ततः पुरुषाहारक्षममन्नं परिविष्य यथा संभवं व्यञ्जनमन्नं जल घृतं च पात्रान्तरस्थं तत्रोपनीय अन्नं मधुनाभिघार्य ॐ मधुव्वातेत्यादि ऋचं मधु मधु मध्विति च जपित्वा पात्रमालभेत । ततः सव्येन हस्ते पात्रं पश्चिमभागे स्पृशन् तदु परिगतदक्षिणहस्तेनाधोमुखेन पूर्वभागे पात्रं स्पृशन् ॐ पृथिवी ते पात्रमित्यादि ॐ इदं विष्णुरित्यादि कृष्ण कव्यमिदं रक्ष मदीयमिति पठित्वा वामेन पाणिना पात्रं स्पृशन्नेव दक्षिणं पाणिमुद्धृत्य ॐ इदमन्नम् ॐ इमा आपः ॐ इदमाज्यम् ॐ इदं कविरित्यन्ने जले घृते पुनरन्ने चाङ्गुष्ठं निक्षिप्य ॐ अपहता इत्यादिनान्नोपरि तिलान्विकीर्य्य मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्राय पित्रेऽमुकशर्मणे सांवत्सरिकैकोद्दिष्टश्राद्धे एतत्तेऽन्नं सोपकरणं स्वधेत्युत्सृजेत् । ततो वामहस्त मुद्धृत्य ॐ अन्नहीनमित्यादि पठित्वा ॐ गायत्रीं त्रिर्जपेत् । कुशंषूपविश्य ॐ मधुव्वातेत्यादि

जपेत् । ततः कृणुष्व पाज इत्याद्या रक्षोघ्नीर्ऋचो जपित्वा भूमौ तिलान्विकीर्य पितरं ध्यात्वा ॐ उदीरतामइत्यादिपितृमन्त्रान् ॐ सहस्रशीर्षा इत्यादिपुरुषसूक्तम् ॐ आशुः शिशान इत्यादिक मप्रतिरथं च जपेत् । यथाशक्त्यन्यान्यपि पवित्राणि जपेत् । रुचिस्तवादीनि च जपेत् । ॐ नम स्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे । नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ॥ इति पठित्वा उच्छि ष्टसमीपे दक्षिणाग्रं कुशत्रयमास्तीर्य्यं जलेन सिक्त्वा किंचिदन्नं सघृततिलजलसिक्तमादाय ॐ अग्नि दग्धाश्चेत्यादिमन्त्रस्थफलमुद्दिश्य कुशोपरि अन्नं विकिरेत् । ततः सव्यं कृत्वाचम्य हरिं स्मृत्वा गायत्रीं मधुव्वाता इत्यादिकं मधुमधुमध्विति च जपेत् । ततोऽपसव्यं कृत्वा हस्तमात्रचतुरङ्गुलोच्छ्रितदक्षिण प्लवपिण्डिकायां प्रादेशमात्रं परिमाय दर्भपिञ्जल्या दक्षिणाङ्गुष्ठतर्जनीधृतमूलया वामहस्ताङ्गुष्ठतर्जनी धृतोपरिभागया ॐ अपहताऽसुरा रक्षाᳬंसि वेदिषद इति प्रादेशमात्रमुल्लिख्य दर्भपिञ्जलीमुत्तरस्यां दिशि त्यजेत् । ॐ ये रूपाणीत्यादिनाङ्गारं भ्रामयित्वा अङ्गारं दक्षिणस्यां दिशि क्षिपेत् । ततस्तत्र च्छिन्न मूलकुशत्रयमास्तीर्य सव्यं कृत्वा देवताभ्य इति त्रिर्जपेत् । ततः अपसव्यं कृत्वा तिलजलगन्ध

पुष्पाणि पुटके कृत्वा पुटकं वामहस्ते धृत्वा मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डस्थानेऽत्रावनेनिक्ष्व ते स्वधेति छिन्नमूलकुशोपरि अवनेजनं दद्यात्, किंचिज्जलं पुटकेऽवशेषयेत् । ततः तिलजलव्यञ्जनघृतमिश्रैरन्नैः पिण्डं बिल्वोपमं निर्माय मधु घृताभ्यामभिघार्य्य मोटकतिलजलसहितमादाय सव्योपगृहीतदक्षिणहस्तेन ॐ अद्यामुकगोत्र पित रमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे एष ते पिण्डः स्वधेति छिन्नमूलकुशोपरि पिण्डं दद्यात् । ततः कुशमूले तूष्णीं करं प्रोक्ष्य सव्यं कृत्वा द्विराचामेत् । हरिं स्मृत्वा अपसव्यं कृत्वा दक्षि णामुखः अत्र पितमार्दयस्व यथाभागमावृषायस्वेति पठित्वा उत्तराभिमुखीभूय श्वासं नियम्य पितरं ध्यायन् पुनर्दक्षिणाभिमुखो भवन् ॐ अमीमदन्तपितर्यथाभागमावृषायिष्टेति पठेत् । ततः पूर्वदत्तावशिष्टजलयुतप्रत्यवनेजनजलपात्रमादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् सांवत्स रिकैकोद्दिष्टश्राद्धे पिण्डेऽऽत्र प्रत्यवनेनिक्ष्व ते स्वधेति पिण्डोपरि प्रत्यवनेजनं दद्यात् । ततो नीवीं विस्रस्य सव्येनाचम्यापसव्यं कृत्वा वामेन पाणिना सूत्रमादाय दक्षिणकरेण धृत्वा ॐ नमस्ते पिता

रसाय नमस्ते पितः शोषाय नमस्ते पितर्जीवाय नमस्ते पितः स्वधायै नमस्ते पितर्घोराय नमस्ते पितर्मन्यवे नमस्ते पितः पितर्नमस्ते गृहाणान्नः पितर्देहि सतस्ते पितर्देष्म इति पठित्वा ॐ एतत्ते पितर्वास इति पिण्डोपरि सूत्रं दद्यात् । ततो मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र पितरमुक शर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे पिण्डे एतत्ते वासः स्वधेति सूत्रमुत्सृजेत् । ततः पितरमुद्दिश्य पिण्डे तूष्णीं गन्धपुष्पधूपदीपताम्बूलानि दद्यात् । ततः ॐ शिवा आपः सन्त्विति जलम् ॐ सौमनस्यमस्त्विति पुष्पं च दत्त्वा ॐ अक्षतं चारिष्टमस्त्विति तण्डुलान्भोजनपात्रे क्षिपेत् । ततश्च मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धे दत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामित्यक्षय्योदकं दद्यात् । ततः सव्यं कृत्वा दक्षिणाभिमुखः ॐ अघोरः पितास्त्विति पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् । ततः पूर्वाभिमुखः कृताञ्जलिः सुमनाः ॐ गोत्रं नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो माव्यगमद्बहुदेयं च नोऽस्तु ॥ अन्नं च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म

कश्चन ॥ एताः सत्या आशिषः सन्तु इत्याशीःप्रार्थनं कृत्वा अपसव्यं कृत्वा सपवित्रकुश त्रयं दक्षिणाग्रं पिण्डोपरि धृत्वा ॐ ऊर्जं वहन्तीरमृतमिति मन्त्रेण कुशोपरि दक्षिणाग्रां जलधारां दद्यात् । ततो नम्रीभूय पिण्डमाघ्रायोत्थापयेत् । पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत् । अर्घ्यपात्रमुत्तानीकृत्य दक्षिणां दद्यात् । तथा मोटकादीन्यादाय रजतं च ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः कृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणात्वेन दातुमहमुत्सृजे इति दद्यात् । यद्युपस्थितं रजतं न भवति तदा रक्तिकामितं रजतं चन्द्रदैवतमित्येवमादिवाक्यं प्रयोक्तव्यम् । इदं पदं न प्रयोक्तव्यमिति विशेषः । ततः ॐ अभिरम्यतामिति विसर्जनम् । ततः सव्यं कृत्वा देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमो नमः इति त्रिः पठेत् । ततोऽपसव्यं कृत्वा पाणिभ्यां दीपं निर्वापयेत् । ततो हस्तौ पादौ च प्रक्षाल्य सव्यं कृत्वाऽऽचम्य ॐ ब्रह्मणे स्वाहा ० ॐ प्रजापतये स्वाहा ॐ गृह्याभ्यः स्वाहा ० ( । ) ॐ कश्यपाय स्वाहा ० ॐ अनुमतये स्वाहा । ततो हुतशेषान्नेन बलिदानम् ।

ॐ पर्ज्जन्याय नमः अद्भ्यो नमः पृथिव्यै नमः उदक्संस्थाय धात्रे नमः विधात्रे नमः द्वारशाखयोः वायवे नमः इति प्रतिदिशम् । ॐ प्राच्यै नमः ॐ अवाच्यै नमः ॐ प्रतीच्यै नमः ॐ उदीच्यै नमः इति प्रतिदिशम् । ॐ ब्रह्मणे नमः ॐ अन्तरिक्षाय० ॐ सूर्य्याय० इति मध्ये ॐ विश्वेभ्यो देवेभ्यो नमः ॐ विश्वेभ्यो भूतेभ्यो नमः ॐ उषसे नमः ॐ भूतानां पतये नमः इत्युत्तरोत्तरम् । ततः प्राचीनावीती दक्षिणामुखः पातितवामजानुः पितृतीर्थेन दक्षिणस्यां दिशि ॐ पितृभ्यः स्वधा नमः इति दद्यात् । ततो बलिशेषान्नलिप्तपात्रं प्रक्षाल्य यक्ष्मैतत्ते निर्णेजनं नमः इति वायव्यां दिशि दद्यात् । देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसङ्घाः । प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मया प्रदत्तम् । पिपीलिकाः कीटपतङ्गकाद्या बुभुक्षिताः कर्म्मनिबन्धबद्धाः । प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु । येषां न माता न पिता न बन्धुर्नचान्नसिद्धिर्न तथान्नमस्ति । न तृप्तयेऽन्नं भुवि दत्तमेतत्तेषां तु तृप्तिर्मुदिता भवन्तु । शङ्खः—सौरभेय्य इति गोभ्यस्ततो द्वौ श्वानाविति शुनाम् ऐन्द्रेति वायसानां

च शनैर्निर्वर्तयेद्भुवि । ततो ब्राह्मणान्भोजयेत् । इति नैमित्तिकश्राद्धबलिदानम् । ॐ प्रमादात्कुर्वतां कर्म्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरिति पठित्वा श्राद्धसंपूर्तिकामो विष्णुं स्मरेत् । श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत् । अम्भसि वा क्षिपेत् । शेषं ज्ञातिभिः सह भुञ्जीत ॥ एवमेव पितृव्यभ्रात्रादिश्राद्धप्रयोगः ॥ शस्त्रादिहतनिमित्तकमाश्विनकृष्णचतुर्दश्यामप्येकोद्दिष्टमेव कर्तव्यम् । तत्र सांवत्सरिकपदं परं न प्रयोक्तव्यमिति ॥ अथ मातृश्राद्धप्रयोगः ॥ अथ शुक्लाम्बरः स्नातो मध्याह्ने सुसमावृतः पञ्चगव्योपलेपितं ज्वलदङ्गारशोभितं गौरमृत्तिकाच्छादितं यथाप्रदेशासादितश्राद्धीयद्रव्यं तं देशमागत्य पादौ प्रक्षाल्याचम्य सपिण्डस्त्रीद्वारा पाचयेत् । स्वयं वा पचेत् । ततः पादौ प्रक्षाल्याचम्य शुद्धासने उपविश्य दीपं प्रज्वाल्याचम्य प्राङ्मुखः परकर्तृके पाके सिद्धमिति पाचिकां पृष्ट्वा ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥ ॐ पुण्डरीकाक्षः पुनात्विति कुशत्रयजलैः श्राद्धीयद्रव्याणि सिञ्चेत् । ततः कुशत्रयतिलजलान्यादाय ॐ अद्यामुकमासीया

मुकपक्षीयासुकतिथावसुकगोत्राया मातुरमुकदेव्याः सांवत्सरिकैकोद्दिष्टश्राद्धमहं करिष्ये इति संकल्पं कुर्यात् । ततो गायत्रीं त्रिर्जपित्वा देवताभ्यः पितृभ्यश्च महेत्यादि त्रिर्जपेत् । ततोऽपसव्यं कृत्वा पातितवामजानुर्दक्षिणामुखो मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्राया मातुरमुकदेव्याः सांवत्सरिकैकोद्दिष्टश्राद्धे इदमासनं ते स्वधेति मोटकरूपमासनं दक्षिणाग्रं सतिलमुत्सृजेत् । ततः ॐ अपहता असुरा रक्षा ᳪ सि वेदिषदः इत्यन्नपात्रे वामावर्तेन तिलान्विकीर्य्य ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः॥अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥इति पठित्वा अर्घ्यपात्रे दक्षिणाग्रं पवित्रं धृत्वा ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ॥ शंय्योरभिस्रवन्तु नः ॥ इत्यर्घ्यपात्रे जलं क्षिपेत् । तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः ॥ प्रत्नमद्भिः प्रक्तः स्वधया पितॄँल्लोकान्प्रीणीहि नः स्वाहेति तिलान् क्षिप्त्वा गन्धपुष्पे तूष्णीं क्षिपेत् । ततोऽर्घ्यपात्रं वामहस्ते कृत्वा पवित्र भोजनपात्रोपरि उत्तराग्रं धृत्वा तदुपरि किंचिदुदकान्तरं दत्त्वा या दिव्या आपः पयसा संबभूवुर्य्याआन्तरिक्षा उत पार्थिवीर्य्याः । हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः

श ॰ स्योनाः सुहवा भवन्तु इति पठित्वा मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रे मातरमुकि देवि सांवत्सरिकैकोद्दिष्टश्राद्ध इदं ते हस्तार्घ्यं स्वधेत्यर्घ्य दद्दुत्सृजेत्। ततोऽवशिष्टजलसहितं पवित्रसहितं चार्घ्यपात्रमासनवामभागे ॐ मात्रे स्थानमसीति न्युब्जीकुर्य्यात्। तच्च दक्षिणादानपर्यन्तं नोद्धरेत् न चालयेत्। ततो गन्धादिदानम्। ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलसिन्दूरवासांसि त स्वधेति दद्यात्। ततो जलेनासनसहितभोजनपात्रस्य चतुर्दिक्षु चतुष्कोण मण्डलं कृत्वा व्यञ्जनं श्राद्धदेयान्नाग्रभागं तिलजलसहितं कुत्रचित् पुटाकदौ कृत्वा ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो नमः इति मोटकादिना भूस्वामिनेऽन्नमुत्सृजेत्। ततः कराभ्यां ताम्रपात्रस्थमन्नं मातरं ध्यायन्भोजनपात्रे पुरुषाहारक्षममन्नं परिविष्य यथासंभवं सव्यञ्जनं घृतं पानीयं च पात्रान्तरेषूपनीय मधुनान्नमभिघारयेत्। ततः ॐ मधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्न्नः सन्त्वोषधीः मधुनक्तमुतोषसो मधुमत्पार्थिवꣳ रजः। मधुद्यौरस्तु नः पिता। मधुमान्नो व्वनस्पतिर्म्मधुमाँ ऽअस्तु सूर्य्यः। माध्वीर्ग्गावो भवन्तु नः। मधु मधु

मद्ध्विति च जपेत्। ततः पाणिभ्यां न्युब्जाभ्यां पात्रं स्पृशन् ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृते अमृतं जुहोमि स्वाहा। ॐ इदं विष्णुर्व्विचक्रमे त्रेधा निदधे पदम्। स मूढमस्य पा ᳚ सुरे। ॐ कृष्ण कव्यमिदं रक्ष मदीयमिति पठेत्। ततो दक्षिणहस्तमुत्तानं तदङ्गुष्ठम् ॐ इदमन्नमित्यन्ने ॐ इमा आप इति जले ॐ इदमाज्यमिति घृते ॐ इद कविरिति पुनरन्ने निवेशयेत्। ॐ अपहता असुरारक्षा ᳚ सि वेदिषदः इत्यन्ने तिलान् क्षिपेत्। ततो मोटकादीन्यादाय ॐ अद्यामुक गोत्रायै मात्रेऽमुकदेव्य सांवत्सरिकैकोद्दिष्टश्राद्धे इदमन्नं सोपकरणं ते स्वधा इत्यन्नमुत्सृजेत्। ततः पात्रं त्यजेत्। ॐ अन्नहीनं क्रियाहीन विधिहीनं च यद्भवेत्। तत्सर्वमच्छिद्रमस्त्विति पठित्वा गायत्रीं त्रिर्जपित्वा कुशेषूपविश्य ॐ मधुव्वातेति जपेत्। ततः कृणुष्वपाज इत्याद्या रक्षोघ्नी र्ऋचो जपेत् तिलान्भूमौ विकीर्य्य मातरं ध्यात्वा ॐ उदीरतामवर इत्यादिपित्र्यमन्त्रान्सहस्रशीर्षेत्यादिपुरुषसूक्तम् ॐ आशुः शिशान इत्यादिकमप्रतिरथम् अन्यांश्च मन्त्राञ्जपेत् ततः उच्छिष्ट समीपे कुशत्रयमास्तीर्य्य जलेन प्रोक्ष्य सव्यञ्जनमन्नं सघृतं सतिलं जलप्रोक्षितमादाय ॐ

अग्निदग्धाश्च ये जीवा यऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिमिति कुशोपरि अन्नमुत्सृजेत् । ततः सव्यं कृत्वाचम्य हरिं स्मृत्वा गायत्रीं मधुव्वातेति च जपेत् । अप सव्यं कृत्वा वेदिकां कृत्वा पिण्डस्थाने प्रादेशमात्रम् ॐ अपहताऽअसुरा रक्षाᳫसि वेदिषदः इति मन्त्रेण दर्भपिञ्जल्या उल्लिखेत् । दर्भपिञ्जलीमैशान्यां क्षिपेत् ततः ॐ ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरोनिपुरो ये भरन्त्यग्निष्टाँल्लोकान् प्रणुदात्यस्मादिति मन्त्रेण रेखायामङ्गारं भ्रामयित्वा दक्षिणस्यां दिशि त्यजेत् । ततस्तत्र च्छिन्नमूलकुशानास्तीर्य्य सव्यं कृत्वा देवताभ्य इति त्रिर्जपेत् । ततोऽपसव्यं कृत्वा पुटके जलतिलपुष्पगन्धान्कृत्वा मोटकतिलजला न्यादाय ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धे पिण्डस्थानेऽत्रावनेनिक्ष्व ते स्वधेति च्छिन्नमूलकुशोपरि अवनेजनं दद्यात् । ततस्तिलघृतसहितान्नेन पिण्डं कृत्वा मधुघृताभ्या मभिघार्य्य मोटकतिलजलपिण्डानादाय ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धे एष ते पिण्डः स्वधेति पिण्डमपसव्येन गृहीत्वा दक्षिणहस्तेन कुशोपरि दद्यात् । ततः कुशमूले करं प्रोक्ष्य

सव्यं कृत्वा द्विराचम्य हरिं स्मृत्वा अपसव्यं कृत्वा दक्षिणामुखः ॐ अत्र मातर्मादयस्व यथाभाग मावृषायस्वेति पठेत् । उदङ्मुखीभूय श्वासं निरुध्य मातरं ध्यायन्परावर्तमानः ॐ अमी मदन्त माता यथाभागमावृषायिषेति पठेत् । ततोऽवनेजनावशिष्टजलसहित पुटकमादाय मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डे प्रत्यवनेनिक्ष्व ते स्वधा इति प्रत्यवने जनं दद्यात् । ततो नीवीं विस्रस्य सव्यं कृत्वाऽऽचम्य अपसव्यं कृत्वा वामेन पाणिनाधृतं सूत्रं दक्षिणेन चादाय ॐ नमस्ते माता रसाय नमस्ते मातः शोषाय नमस्ते मातर्जीवाय नमस्ते मातः स्वधायै नमस्ते मातर्घोराय नमस्ते मातर्मन्यवे नमस्त मातर्मातर्नमस्ते गृहान्नो मातर्देहि सतस्ते मातर्देष्म इति पठित्वा एतत्त मातर्वास इति मन्त्रेण पिण्डोपरि सूत्र धृत्वा मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धपिण्ड एतत्ते वासः स्वधेति सूत्रमुत्सृजेत् । पिण्डे गन्धपुष्पधूपदीपताम्बूलानि तूष्णीं दत्त्वा ॐ शिवा आपः सन्त्विति जलम् ॐ सौमनस्यमस्त्विति पुष्पम् ॐ अक्षतं चारिष्टमस्त्विति तण्डुलान्भोजनपात्रे निक्षिपेत । ततो मोटकतिलजलान्या

दाय ॐ अद्यामुकगोत्राया मातुरमुकदेव्याः सांवत्सरिकैकोद्दिष्टश्राद्ध दत्तैतदन्नपानादिकमक्षय्यमु पतिष्ठतामित्यक्षय्योदकमुत्सृजेत् । ततः सव्यं कृत्वा दक्षिणामुखः ॐ अघोरा माताऽस्तु इति पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् । ततः पूर्वाभिमुखः कृताञ्जलिः ॐ गोत्रं नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदाः संततिरेव च ॥ श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्तु ॥ अन्नं च नो बहु भवेदतिथींश्च लभेमहि ॥ याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥ एताः सत्या आशिषः सन्तु इत्याशीःप्रार्थनं कुर्यात् । ततोऽपसव्यं कृत्वा सपवित्रकुशत्रयं पिण्डोपरि आस्तीर्य ॐ ऊर्ज्जं वहन्ती रमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधास्थ तर्पयत मे मातरमिति कुशोपरि दक्षिणाग्रां जलधारां दद्यात् । ततो नम्रीभूय पिण्डमाघ्रायोत्थापयेत् । पिण्डाधारकुशानुल्मुकं च वह्नौ निक्षिप्यार्घपात्रमुत्तानी कृत्य दक्षिणां दद्यात् । ततो मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्राया मातुरमुकदेव्याः सांव त्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थं रक्तिकापरिमितं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणात्वेन दातुमहमुत्सृजे इति यथावैभवं दद्यात् ॐ अभिरम्यतामिति विसर्ज्जनम् । ततः सव्यं कृत्वा

ॐ देवताभ्य इति त्रिर्जपेत्। ततोऽपसव्यं कृत्वा हस्ताभ्यां दीपं निर्वाप्य हस्तौ पादौ प्रक्षाल्य सव्येना चम्य ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः॥ इत्युक्त्वा श्राद्धसंपूर्तिकामो विष्णुं स्मरेत्। ततः श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत्, जले वा क्षिपेत्। तत इष्टैः सह शेषभोजनम् । एवं पत्न्यादिश्राद्धम् ॥ तत्र पत्न्यादिसम्बन्धिनामोल्लेखो विशेषः । शस्त्रादिहतनिमित्तकेऽपि एकोद्दिष्टे एष एव प्रयोगः । सांवत्सरिकपदं तत्र न प्रयोक्तव्यम् । तद्यथा-- आश्विनकृष्णचतुर्दश्यां तिथावमुकगोत्राया मातुरमुकदेव्या एकोद्दिष्टश्राद्धमहं करिष्ये इति संकल्पं कुर्यात् । ॐ अद्यामुकगोत्रे मातरमुकि देवि एकोद्दिष्टश्राद्धे इदमासनं ते स्वधा इत्येवमाद्युत्सर्ग वाक्यम् । इत्येकोद्दिष्टप्रयोगः ॥ अथ स्त्रीकर्तृकश्राद्धप्रयोगः ॥ स्नाता शुक्लवस्त्रयुगधारिणी मध्याह्ने सुसमावृतं पञ्चगव्योपलेपितं ज्वलदङ्गारशोधितं गौरमृत्तिकाच्छादितं यथाप्रदेशासादितश्राद्धीयद्रव्यं ज्वलितदीपं विकीर्णतिलगौरसर्षपं श्राद्धदेशमागत्याचम्यासने प्राङ्मुखी उपविशेत् । पाचिकान्तर पक्षे सिद्धमिति पाचिकां पृच्छेत् । ॐअपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरी

काक्षं स बाह्याभ्यन्तरः शुचिः ॥ ॐ पुण्डरीकाक्षः पुनात्विति कुशत्रयजलेन श्राद्धीयद्रव्याणि सिञ्चेत् । ततः कुशत्रयतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पत्युरमुकशर्मणः सांवसरिकैकोद्दिष्टश्राद्धमहं करिष्ये इति संकल्पयेत् । ततः देवताभ्य इति त्रिर्जपेत् । ततो दक्षिणाभिमुखी पातितवाम जानुर्मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे इद मासनं ते नमः इति पितृतीर्थेन मोटकरूपमासनमुत्सृजेत् । ततस्तूष्णीं भोजनपात्रे तिलान् प्रक्षिप्य अर्घ्यपात्रे पवित्रधारणं जलप्रक्षेपस्तिलगन्धपुष्पप्रक्षेपश्च । ततोऽर्घपात्रं वामहस्ते कृत्वा पवित्रमुत्तराग्रं भोजनपात्रे धृत्वा तदुपरि उदकान्तरं दत्त्वा मोटकादीन्यादय अद्यामु कगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे इदं ते हस्तार्घ्यं नम इत्यर्घ्यं पवित्रोपरि ददत्युत्सृ जेत् । ततोऽवशिष्टजलपवित्रसहितमर्घ्यपात्रमासनवामभागे पत्ये स्थानमसीति न्युब्जीकुर्यात् । ततो गन्धादिदानम् । मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र पतेऽमुकशर्मन् सांवत्सरिकैको द्दिष्टश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवतिवासांसि ते नमः । ततो जलेनासनसहितं

भोजनपात्रं मण्डलेन वेष्टयेत् । श्राद्धीयान्नाग्रभागं सव्यञ्जनं सतिलजलं पुटकादौ कृत्वा मोटका दीन्यादाय इदमन्नमेतद्भूस्वामिपितृभ्यो नम इति भूस्वामिनेऽन्नं दद्यात् । ततस्ताम्रपात्रस्थितमन्नं कराभ्यामादाय पतिं ध्यायन्ती परिवेषयेत् । जलं घृतं व्यञ्जनपुटकान्तरस्थं तत्रोपनीय अन्ने मधु दत्त्वा मधु मधु मध्विति च जपेत् । ततः उभाभ्यां व्यस्ताभ्यां हस्ताभ्यां भोजनपात्रमालभ्यान्न ममृततया चिन्तयेत् । ॐ कृष्ण कव्यमिदं रक्ष मदीयमिति पठित्वा दक्षिणहस्तमुत्तोल्य तदङ्गुष्ठ मिदमन्नमिमा आपः इदमाज्यमित्यन्नजलघृतेषु निक्षिप्य इदं कविरिति पुनरन्नेऽङ्गुष्ठं निक्षिप्य अन्नो परि तिलान्विकीर्य्य मोटकादीन्यादाय अद्यामुकगोत्र पतेऽमुकशर्म्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे इदमन्नं सोपकरणं ते नमः इत्यन्नमुत्सृजेत् । ततो वामहस्तमप्युत्तोल्याऽन्नहीनमित्यादि पठित्वा भूमौ तिलान्विकीर्य्य दर्भेषूपविश्य नीलकण्ठस्तुतिरुचिस्तवादीनि पठेत् । अशक्तौ नमस्तुभ्यं विरू पाक्षेति श्लोकमपि पठेत् । तत उच्छिष्टसन्निधावास्तृतकुशत्रयां भूमिं प्रोक्ष्य सतिलजलं प्रोक्षितं सव्यञ्जनघृतमन्नमादाय अग्निदग्धाश्च इति पठित्वा कुशोपरि कुशादिना सह विकिरेत् । तत आचम्य

हरिं स्मृत्वा दक्षिणामुखी पिण्डस्थाने प्रादेशमात्रं परिमाय करद्वयतर्जन्यङ्गुष्ठधृततन्मूलया दर्भपिञ्जल्या तदुल्लिख्य दर्भपिञ्जलीमुत्तरतः क्षिपेत् । ततस्तत्र ज्वलदङ्गारं भ्रामयित्वा दक्षिणस्यां दिशि क्षिपेत्। ततस्तत्र छिन्नमूलकुशत्रयमास्तीर्य प्राङ्मुखी देवताभ्य इत्यादि त्रिः पठेत् । ततो दक्षिणामुखी पुटके तिलजलगन्धपुष्पाणि कृत्वा पाणिना मोटकादीन्यादाय अद्यामुकगोत्र पतेऽमुकशर्म्मन् सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डस्थानेऽत्रावनेनिक्ष्व ते नमः इति कुशोपरि अवनेजनं दद्यात्। ततस्तिलजलव्यञ्जनमधुघृतयुतान्नेन पिण्डं निर्माय मधुघृताभ्यामभिघार्य्य मोटकादीनि चादाय अद्यामुकगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे एष ते पिण्डो नमः इत्यवनेजनकुशोपरि वामान्वारब्धदक्षिणपाणिना पिण्डं दद्यात् । ततो द्विराचम्य हरिं स्मृत्वा उत्तराभिमुखीभूय श्वासं नियम्य पतिं ध्यायन्ती दक्षिणामुखी भवेत् । ततो दत्तावशिष्टजलयुतमवनेजनपात्रं मोटकादीनि चादाय अद्यामुकगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डेऽत्र प्रत्यवनेनिक्ष्व ते नमः इति प्रत्यवनेजनं दद्यात्। ततो नीवीं विस्रस्याचम्य दक्षिणामुखी वामेन पाणिना

सूत्रमादाय दक्षिणेन पिण्डोपरि धृत्वा अद्यामुकगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डे एतत्ते वासो नमः इति मोटकादिना सूत्रमुत्सृजेत् । ततः पिण्डे गन्धादिदानम् । ततः शिवा आपः सन्त्विति जलम् । सौमनस्यमस्त्विति पुष्पम् । अक्षतं चारिष्टमस्त्विति तण्डुलान्भोजन पात्रे प्रक्षिप्य मोटकादीन्यादाय अद्यामुकगोत्रस्य पत्युरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धे दत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामित्यक्षय्योदकं दद्यात् । ततः पिण्डोपरि अघोरः पतिरस्तु इति पूर्वाग्रां जलधारां दद्यात् । ततः प्राङ्मुखी कृताञ्जलिः गोत्रं नो वर्द्धतामित्यादि पठित्वा एताः सत्या आशिषः सन्त्वित्याशिषः प्रार्थयेत् । ततः पिण्डोपरि दक्षिणामुखी सपवित्रकुशत्रयं दक्षिणाग्रमास्तीर्य तदुपरि दक्षिणाग्रां जलधारां दद्यात् । ततो नम्रीभूय पिण्डमाघ्रायोत्थापयेत् । पिण्डाधारकुशानुल्मुकं च वह्नौ निक्षिपेत् । ततोऽर्घ्यपात्रमुत्तानीकृत्य दक्षिणादानम् । अद्यामुक गोत्रस्य पत्युरमुकशर्म्मणः कृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थं रक्तिकापरिमितं रजतं चन्द्र दैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणात्वेन दातुमहमुत्सृजे इति दक्षिणां च दद्यात् । ततोऽभि

रम्यतामिति विसर्जनम् । ततः प्राङ्मुखी देवताभ्य इति त्रिः पठेत् । ततो दक्षिणामुखी हस्ताभ्यां दीपं निर्वाप्य हस्तौ पादौ प्रक्षाल्याचम्य प्रमादात्कुर्वतामित्यादि पठित्वा श्राद्धसंपूर्णताकामनया विष्णुं स्मरेत् । ततः श्राद्धीयवस्तु ब्राह्मणायार्प्पयेत्, अम्भसि वा क्षिपेत् । तत इष्टैः सह भोजनम् । एवमेव शस्त्रहतादिनिमित्तकमाश्विनकृष्णचतुर्दश्यां तिथौ श्राद्धं कर्तव्यम् । सांवत्सरिकपदं तत्र न प्रयोक्तव्यम् । तद्यथा–अद्य आश्विनकृष्णचतुर्दश्यां तिथौ अमुकगोत्रस्य पत्युरमुकशर्मण एकोद्दिष्ट श्राद्धमहं करिष्ये इति संकल्पः । अद्यामुकगोत्र पतेऽमुकशर्म्मन्नेकोद्दिष्टश्राद्धे इदमासनं ते नम इत्ये वमादिनाऽऽसनादिदानम् । एवमेव शूद्रकर्तृकैकोद्दिष्टश्राद्धप्रयोगः ॥ अथापात्रिकपार्वणश्राद्धप्रयोगः॥ अपराह्णे स्नातः शुक्लद्विवासाः शुचिराचम्य वस्त्रादिना वेष्टितं श्राद्धदेशमागच्छेत् । ततः प्राङ्मुख उपविश्य सिद्धान्नसंभवे सिद्धमिति पाचिकां पृष्ट्वा ॐ अपवित्र इत्यादि पठित्वा ॐ पुण्डरीकाक्षः पुनात्विति कुशत्रयानीतजलैः श्राद्धवस्तूनि सिञ्चेत् । रक्षार्थं दीपं निधाय गौरसर्षपैरवकीर्य्य ॐ नमो नमस्ते गोविन्द पुराण पुरुषोत्तम ॥ इदं श्राद्धं हृषीकेश रक्ष त्वं सर्वतो दिशः ॥ प्राच्यै नमः अवाच्यै नमः

प्रतीच्यै नमः उदीच्यै नमः यवपुष्पैः भूम्यै नमः इति भूमिं त्रिः संपूज्य पादयोरधः कुशत्रयं दत्त्वा कुशत्रयतिलजलैः संकल्पं कुर्य्यात्। ॐ अद्यामुकमासीयामुकतिथावमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणाममपात्रिकपार्वणश्राद्धमहं करिष्ये। ततो गायत्रीं त्रिर्जपित्वा ॐ देवताभ्य इत्यादि त्रिर्जपेत्। तत उत्तराभिमुखो दक्षिणोत्तरक्रमादासादितकुशत्रयात्मकासनयोः प्रथमं दक्षिणमासनं सयवमुत्सृजेत्। ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां पार्वणश्राद्धसंबन्धिनो विश्वेदेवा इदमासनं वो नमः इति कुशत्रययवजलैरुत्सृजेत्। एवम् ॐ अद्यामुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां पार्वणश्राद्धसंबन्धिनो विश्वेदेवा इदमासनं वो नम इत्यपरमुत्सृजेत्। ततोऽपसव्यं कृत्वा पातितवामजानुर्दक्षिणाभिमुखो द्विगुणभुग्नकुशत्रयतिलजलान्यादाय पूर्वपश्चिमासादितमोटकरूपाणि षडासनानि तिलजलप्रोक्षितानि प्रत्येकं पित्रादिभ्यः पश्चिमत आरभ्य उत्सृजेत्। तत्र क्रमः। ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धे इदमासनं ते स्वधा।

एवं पितामहप्रपितामहयोः । ॐ अद्यामुकगोत्रमातामहामुकशर्मन् पार्वणश्राद्धे इदमासनं ते स्वधा । एवमेव प्रमातामहवृद्धप्रमातामहयोर्दद्यात् । ततः सव्यं कृत्वा ॐ विश्वान्देवानहमावाहयिष्ये इत्युक्त्वा ॐ विश्वे देवासआगत शृणुतामइमꣳहवम् । एदं बर्हिर्निषीदतेत्यादिना देवानावाह्य ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति यवान्विकीर्य्य ॐ विश्वेदेवाः शृणुतेत्यादि जपेत् । ॐ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ॥ ये यत्र योजिताः श्राद्धे सावधाना भवन्तु त ॥ इति श्लोकं च पठेत् । ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः ॐ पितॄनहमावाहयिष्ये इत्युक्त्वा ॐ उशन्तस्त्वा निधीम ह्युशन्तः समिधीमहि ॥ उशन्नुशतआवह पितॄन् हविषे अत्तवे इत्यादिना पितॄनावाह्य ॐ अपहता असुरा रक्षाꣳसि वेदिषदः इत्यादिना पात्रेषु तिलान् विकीर्य्य ॐ आयन्तु नः पितरः सोम्यासोऽग्नि ष्वात्ताः पथिभिर्देवयानैः ॥ अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽअवन्त्वस्मान् ॥ इत्यादि पठेत् । ततः सव्यं कृत्वा देवार्घ्यपात्रद्वये पवित्रे धृत्वा अपसव्येन पित्राद्यर्घ्यपात्रेषु प्रत्येकं पवित्रं धृत्वा सव्येन देवार्घ्यपात्रद्वये ॐ शन्नो देवीरभिष्टयआपो भवन्तु पीतये । शंय्योरभिस्रवन्तु नः ॥ इत्यादिना

जलं प्रक्षिप्य अपसव्येन पित्राद्यर्घ्यपात्रषट्केऽनेनैव मन्त्रेण जलं पितृतीर्थेन निक्षिपेत् । ततः सव्यं कृत्वा ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति देवार्घ्यपात्रद्वये प्रत्येकं यवान्प्रक्षिप्य अपसव्येन पित्राद्यर्घ्यपात्रेषु प्रत्येकम् ॐ तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः ॥ प्रत्नवद्भिः प्रत्तः स्वधया पितॄँल्लोकान्प्रीणीहि नः स्वाहा ॥ इति तिलान्प्रक्षिपेत् । ततः सव्येन देवार्घ्यपात्र द्वये तूष्णीमेव गन्धपुष्पे प्रक्षिप्य अपसव्येन पित्राद्यर्घ्यपात्रेषु प्रक्षिपेत् । ततः सव्यं कृत्वा एवं देवार्घ्यपात्रं वामहस्ते कृत्वा तत्र स्थितं पवित्रं देवभोजनपात्रे पूर्वाग्रं धृत्वा तदुपरि किंचिदुदकान्तरं दत्त्वा ॐ या दिव्या आपः पयसा संबभूवुर्याआन्तरिक्षाउत पार्थिवीर्याः । हिरण्यवर्णा यज्ञिया स्ता नऽआपः शिवाः श ँ स्योनाः सुहवा भवन्तु॥ इति पठित्वा यवकुशजलान्यादाय ॐ अद्यामुक गोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां पार्वणश्राद्धसंबन्धिनो विश्वेदेवाः इदं वो हस्तार्घ्यं नमः इत्यर्घ्यं ददद्युत्सृजेत् । एवमेव मातामहादिदेवेभ्योऽपि दद्यात् । ततोऽपसव्यं कृत्वा पित्रर्घ्यपात्रं वामहस्ते कृत्वा पितृभोजनपात्रे दक्षिणाग्रं पवित्रं धृत्वा तदुपरि किंचिदुदकान्तर

दत्त्वा ॐ या दिव्या आपः पयसा संबभूवुर्याऽआन्तरिक्षाऽउत पार्थिवीर्याः ॥ हिरण्यवर्णा यज्ञियास्ता नऽआपः शिवाः श ं स्योना सुहवा भवन्तु ॥ इति पठित्वा मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धे इदं ते हस्तार्घ्यं स्वधेति अर्घ्यं दद्दुत्सृजेत् । एवमेव पिता महादिपञ्चभ्यो दद्यात् । ततः सव्यं कृत्वा पवित्रसहितमवशिष्टजलयुतं देवार्घ्यपात्रद्वयं यथाक्रमं प्रत्येकं देवासनदक्षिणपार्श्वे ॐ विश्वेभ्यो देवेभ्यः स्थानमसीत्युक्त्वा उत्तानमेव धारयेत् । अप सव्यं कृत्वा किंचित्प्रपितामहार्घ्यपात्रस्थितपवित्रादीनि पितामहार्घ्यपात्रे कृत्वा तानि सर्वाणि पित्रर्घ्यपात्रे कृत्वा पित्रर्घ्यपात्रं पितामहार्घ्यपात्रोपरि तदुभयं प्रपितामहार्घ्यपात्रोपरि धृत्वा पितृवामपार्श्वे ॐ पितृभ्यः स्थानमसीति मिलितान्येव न्युब्जीकुर्यात् । एवमेव मातामहाद्यर्घ्य पात्राणि मेलयित्वा मातामहप्रमातामहवृद्धप्रमातामहेभ्यः स्थानमसि इत्यर्घ्यपात्राणि न्युब्जीकुर्यात् । तथा स्थापितानि च तानि पात्राणि दक्षिणादानपर्यन्तं नोद्धरेत्, न चालयेत् । सव्यं कृत्वा गन्धादि दत्त्वा यवकुशजलैः संकल्पं कुर्यात् । ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुक

शर्मणां पार्वणश्राद्धसबंधिनो विश्वेदेवाः एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि वो नम इति यथासंभवमुत्सृजेत् । एवमेव मातामहादिदेवेभ्योऽपि दद्यात । ततोऽपसव्यं कृत्वा गन्धादि दत्त्वा मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धे एतानि गन्ध पुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ते स्वधेति पित्रे गन्धादि दद्यात । एवमेव पितामहादि पञ्चभ्योऽपि दद्यात् । ततो जलेन भोजनपात्रसहितमासनं वेष्टयित्वा मण्डलानि कुर्यात् । ततः श्राद्ध देयान्नाग्रभागमानीय सघृतं तत्सव्येनैव प्राङ्मुखः पुटकस्थितजले आहुतिद्वयं जुहुयात् ॥ ॐ अग्नये कव्यवाहनाय स्वाहा । ॐ सोमाय पितृमते स्वाहा । ततो जलघृतसहितं तिलव्यञ्जनयुत मन्नमपसव्येन इदमन्नमेतद्भूस्वामिपितृभ्यो नम इति दद्यात् । ततो हुतशेषमन्नं किंचित्किंचित्सव्येन देवपात्रद्वये अपसव्येन पित्रादिपात्रेषु दत्त्वा पिण्डार्थं किंचिदवशेषयेत् । तत उत्कृष्टमन्नं सिद्धमामं वा पुरुषाहारक्षमं प्रत्येकं परिविष्य यथासंभवमुपकरणं जलं घृतं च तत्रोपनीय सव्येन पित्रादिषु मध्वन्नोपरि दत्त्वा प्रत्येकं ॐ मधु व्वाताऽऋतायत मधु क्षरन्ति सिन्धवः ॥ माध्वीर्नः सन्त्वो

षधीः ॥ ॐ मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः ॥ मधु द्यौरस्तु नः पिता ॥ ॐ मधुमान्नो व्वनस्पतिर्म्मधुमानऽअस्तु सूर्यः ॥ माध्वीर्ग्गावो भवन्तु नः ॥ ॐ मधु मधु मध्विति च जपेत्। ततः सव्येन उत्तानपाणिभ्यां देवपात्रे स्पृष्ट्वा ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृते ऽअमृतं जुहोमि स्वाहा ॥ ॐ इदं विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्यपाꣳसुरे इति पठित्वा ॐ कृष्णहव्यमिदं रक्षमदीयमिति पठित्वा ॐ इदमन्नमित्यन्ने ॐ इमा आप इति जले ॐ इद माज्यमिति घृते ॐ इदं हविरिति पुनरन्ने दक्षिणकराङ्गुष्ठमावेश्य ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति यवानन्ने प्रक्षिप्य ॐअद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्म्मणां पार्वणश्राद्धसंबन्धिनो विश्वेदेवा एतद्वोऽन्नं सोपकरणं नमः इति कुशत्रययवजलैरुत्सृजेत् । एवमेव पितामहादिदेवेभ्योऽपि दद्यात् । ततोऽपसव्यं कृत्वा दक्षिणामुखः पातितवामजानुः पितृपात्रं न्युब्जाभ्यां व्यस्ताभ्यां पाणिभ्यां स्पृष्ट्वा ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृते ऽअमृतं जुहोमि स्वाहा । ॐ इदं व्विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् ॥समूढमस्यपाꣳसुरे इति पठित्वा।

ॐ कृष्णकव्यमिदं रक्ष मदीयमिति पठित्वा ॐ इदमन्नमित्यन्ने ॐ इमा आप इति जले ॐ इद माज्यमिति घृते ॐ इदं कविरिति पुनरन्ने दक्षिणकराङ्गुष्ठमावेश्य ॐ अपहता असुरा रक्षाᳬसि वेदि षद इत्यन्नोपरि तिलान्विकीर्य्य मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्राय पित्रे अमुकशर्मणे पार्वण श्राद्धे एतत्तेऽन्नं सोपकरणं स्वधेति पित्रेऽन्नमुत्सृजेत् । एवमेव पितामहादिभ्योऽपि दद्यात् । यद्येकं पात्रं भवति तदा पृथिवी ते पात्रमिति मन्त्रः पुनर्न पठनीयः । ततः अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् । तत्सर्वमच्छिद्रमस्तु । इति जपेत् । ततो गायत्रीं त्रिर्जपेत् । ततः कुशेषूपविश्य ॐ मधु व्वाता इति त्र्यृचं जपित्वा रक्षोघ्नीः ॐ कृष्णुष्वपाज इत्याद्या ऋचः पठित्वा भूमिं तिलैरवकिरेत् । उदीरता मवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः ॥ असुं यईयुरवृकाऽऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ इत्यादिपितृमन्त्रान् ॐ सहस्रशीर्षेत्यादि पुरुषसूक्तं च जपेत् । ॐ आशुः शिशान इत्यादिकं सप्रतिरथमन्यानि च पवित्राणि जपेत् । पुराणेतिहासमन्त्रादीनि च जपेत् । तत उच्छिष्टसन्निधा वास्तृतकुशत्रयां भूमिं प्रोक्ष्य सर्वप्रकारमन्नमुद्धृत्य सतिलमेकीकृत्य ॐ अग्निदग्धाश्च ये जीवा येऽप्य

दग्धाः कुले मम ॥ भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ इति कुशोपर्य्यन्नमुत्सृजेत् । ततः सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा गायत्रीं मधु व्वाता इति ऋचं मधु मधु मध्विति च जपेत् । ततोऽपसव्यं कृत्वा पिण्डपातनार्थं निर्मितहस्तमात्रचतुरङ्गुलोच्छ्रितदक्षिणप्लव धिण्डिकाद्वयमध्यस्थाने सव्यहस्त धृतोपरिभागेन दक्षिणहस्तधृतमूलेन पवित्रेण ॐ अपहता असुरा रक्षाᳬसि वेदिषदः इति मन्त्रेण प्रादेशमात्रमुल्लिखेत् । पवित्रमैशान्यां दिशि क्षिपेत् । तत उभयत्र ॐ ये रूपाणि प्रतिमुञ्चमाना ऽअसुराः सन्तः स्वधया चरन्ति ॥ परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ इति मन्त्रेण ज्वलदङ्गारं प्रत्येकं भ्रामयेत् । अङ्गारं दक्षिणतो निदध्यात् । तत उपमूलसकृदाच्छिन्नदक्षिणाग्र कुशत्रयं रेखायामास्तृणुयात् । ततः सव्यं कृत्वा ॐ देवताभ्यः इति त्रिर्जपेत् । ततोऽपसव्यं कृत्वा पुटकषट्के जलतिलगन्धपुष्पाणि कृत्वा एकं पात्रं वामहस्ते कृत्वा मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धपिण्डस्थानेऽत्रावनेनिक्ष्व ते स्वधा इत्यास्तृतदर्भमूलेऽवने जनं दद्यात् । एवं पितामहायापरपात्रमादाय कुशमध्ये तृतीयं पात्रमादाय प्रपितामहाय कुशाग्रे

दद्यात् । एवमेव परपिण्डिकायामपि यथाक्रमं कुशष्ववनेजनादि दद्यात् । ततः सव्यञ्जनतिलजल मध्वाज्यहुतशेषान्नेन षट्पिण्डान्निर्म्माय मधुघृताभ्यामभिघार्य्य दद्यात् । प्रथमं मोटकतिलजलपिण्ड मादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धे एष ते पिण्डः स्वधा इति प्रथमावनेजनस्थाने पिण्डं दद्यात् । एवं पितामहप्रपितामहयोः प्रत्येकं तत्तदवनेजनस्थाने पिण्डं दद्यात् । एवमेव पर पिण्डानपि द्वितीयपिण्डिकायां तत्तदवनेजनस्थाने मातामहादिभ्यो दद्यात् । पिण्डदानं च सव्योप गृहीतदक्षिणहस्तेन कार्यम् । ततः प्रपितामहादूर्ध्व त्रयाणां लेपभागभुजां तृप्तिमुद्दिश्य ॐ लेपभाग भुजस्तृप्यन्तु इति पठित्वा पित्रादिकपिण्डाधारकुशमूले करं प्रोक्ष्य सव्यं कृत्वा त्रिराचामेत् । ततो हरिं स्मृत्वा अपसव्यं कृत्वा दक्षिणामुखः ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्व मिति पठित्वा वामावर्तेनोदङ्मुखीभूय प्रीतमनाः श्वासं नियम्य तेनैव यथापरावर्तमानः पितॄ न्भास्वरमूर्तीन् ध्यायन् अमी मदन्त यथाभागमावृषायिषत इति जपेत् । ततः पूर्वदत्तावशिष्टजल युतमवनेजनपात्रमादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धे पिण्डेऽत्र प्रत्यवनेनिक्ष्व ते

स्वधेति प्रथमपिण्डोपरि प्रत्यवनेजनं दद्यात्। एवमेवतत्तदवनेजनपात्रैः पितामहादिभ्यस्तत्तत्पिण्डोपरि प्रत्यवनेजनं दद्यात्। ततो नीवीं विस्रस्य सव्येनाचम्य अपसव्यं कृत्वा वामेन पाणिनाऽऽनीय दक्षिणकरे सूत्रं कृत्वा ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्तसतो वः पितरो देष्म इति पठित्वा एतद्वः पितरो वास इत्युक्त्वा षट्सु पिण्डेषु सूत्राणि धृत्वा मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धपिण्डे एतत्ते वासः स्वधेति सूत्रमुत्सृजेत्। एवमपरपिण्डपञ्चकेषु तत्तन्नाम्नोत्सृजेत्। ततो गन्धपुष्पधूपदीपताम्बूलानि प्रत्येकं पिण्डेषु दद्यात्। ततः ॐ शिवा आपः सन्त्विति जलम्। ॐ सौमनस्यमस्त्विति पुष्पम् ॐ अक्षतं चारिष्टमस्त्विति तण्डुलानन्नपात्रेषु क्षिपेत्। ततो मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः पार्वणश्राद्धे दत्तैतदन्नपानादिकमक्षय्यमस्त्वित्युत्सृजेत्। एवमेव पितामहादीनां तत्तच्छर्मणां गोत्राणां प्रत्येकमुत्सृजेत्॥ ततः सव्यं कृत्वा दक्षिणां

दिशं पश्यन् सुमनाः पिण्डोपरि ॐ अघोराः पितरः सन्त्विति पठन् पूर्वाग्रां जलधारां दद्यात् । ततः कृताञ्जलिः प्राङ्मुख आशिषः प्रार्थयेत–गोत्रं नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ॥ श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्तु । अन्नं च नो बहु भवेदतिथींश्च लभेमहि ॥ याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥ एताः सत्या आशिषः सन्तु । ततोऽपसव्यं कृत्वा पिण्डोपरि सपवित्रकुशानास्तीर्य ॐ ऊर्ज्जं व्वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ॥ स्वधास्थ तर्प्पयत मे पितॄनिति मन्त्रेण सपवित्रकुशोपरि दक्षिणाग्रां जलधारां दद्यात् । ततः स्वस्थानस्थितानेव पिण्डान्नम्रीभूयाघ्रायोत्थापयेत् । ततः पिण्डाधारकुशानुल्मुकद्वयं च वह्नौ क्षिपेत् । ततः सव्येन देवार्घ्यपात्रद्वयं संचाल्यापसव्येन पित्राद्यर्घ्यपात्राण्युत्तानीकृत्य सव्येन कुशत्रययवजलैर्देवदक्षिणां दद्यात् । ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकामुकशर्म्मणां पार्वणश्राद्धसंबन्धिनां विश्वेषां देवानां कृतैतत्पार्वणश्राद्धप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणात्वे दातुमहमुत्सृजे इति दद्यात् । एवं मातामहादिश्राद्धसंबन्धिनां विश्वेदेवब्राह्मणाय दक्षिणां च दद्यात् ।

ततोऽपसव्येन सोदकतिलजलान्यादाय पित्रादिश्राद्धदक्षिणां च दद्यात् । ॐ अद्यामुकगोत्रस्य पितुर मुकशर्मणः कृतैतत्पार्वणश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति तद्दद्यात् । एवं पितामहादिश्राद्धानामपि दक्षिणां दद्यात् । हिरण्यरजतासंपत्तौ यथासंभवमन्यदपि फलमूलादिकं दक्षिणां दद्यात् । वाजे वाजे वत वाजिनो धनेषु विप्राअमृता ऽऋतज्ञाः अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैरिति पित्रादीन् विसर्जयेत् । ॐ विश्वेदेवाः प्रीयन्तामिति देवविसर्जनम् । ततः सव्येन देवताभ्यः पितृभ्यश्चेति त्रिर्जपेत् । ततोऽपसव्येन रक्षादीपं निर्वाप्य सव्यं कृत्वा हस्तौ पादौ प्रक्षाल्याचम्य प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरिति :पठित्वा कर्म पूर्णतार्थं विष्णुं स्मरेत् । श्राद्धीयद्रव्याणि ब्राह्मणाय प्रतिपादयेत् । तदभावे जले वा क्षिपेत् । ततो वैश्वदेवबलिकर्मणी कुर्यात् । तदुक्तम्—स्वाहान्तास्ता जले वाग्नौ कर्यात्पञ्चाहुतीः क्रमात् । ब्रह्मा प्रजापतिर्गृह्याः कश्यपोऽनुमतिस्तथा ॥ १ ॥ चतुर्थ्यन्तैर्जलं क्षिप्त्वा वैश्वदेवबलिं चरेत् ।

पर्जन्य आपः पृथिवी धातापि च विपूर्वगः ॥ २ ॥ चतुर्वायुः प्राच्यवाची प्रतीची चाप्युदीच्यपि ॥ ब्रह्मान्तरिक्षसूर्याश्च विश्वेदेवास्ततः परम् ॥ ३ ॥ विश्वभूतान्युषश्चापि भूतानां च पतिस्तथा । अपसव्येन सतिलं पितृभ्यश्च स्वधा नमः ॥ ४ ॥ सनकादिसप्तमर्त्येभ्यो हन्त कण्ठोपवीतवान् । यक्ष्मैतत्त च सव्येन जलनिर्णेजनं नमः ॥ ५ ॥ दद्यात्काकाश्च चाण्डालाः पतिताः पापसङ्गिनः ॥ ततः कीटपतङ्गाश्च गावः श्वानौ ततः परम् ॥ ६ ॥ चतुर्थ्यन्तानुपादाय नमोन्तान्क्रमतः पठेत् ॥ देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसङ्घाः ॥ प्रेताः पिशाचास्तरवः समन्ताद्ये चान्नमिच्छन्ति मया प्रदत्तम् ॥ १ ॥ कीटाः पतङ्गास्तरवश्च वृक्षा जले स्थले ये विचरन्ति जीवाः ॥ ते तृप्तिमायान्तु मया प्रदत्तं तेभ्यो विसृष्टं भुवि चान्नमेतत् ॥ २ ॥ पिपीलिकाः कीटपतङ्गकाद्या बुभुक्षिताः कर्मनिबन्धबद्धाः । प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु ॥ ३ ॥ येषां न माता न पिता न बन्धुर्न चान्नसिद्धिर्न तथाऽन्नमस्ति ॥ तत्तृप्तयेऽन्नं भुवि दत्तमेतत्ते चान्नतृप्ता मुदिता भवन्तु ॥ ४ ॥ शङ्खः—सौरभेय्य इति गोभ्यस्ततः द्वौ श्वानाविति

श्वभ्यः। ऐन्द्रेति वायसानाञ्च शनकैर्निक्षिपेद्भुवि। ततो ब्राह्मणान् भोजयत् ॥ इति नैमित्तिकश्राद्ध बलिदानम् ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनं संपूर्णतां यान्ति सद्यो वन्दे तमच्युतम् ॥ इति पार्वणश्राद्धविधिः ॥ एष विधिरुपरागनवान्नभक्षणतीर्थप्राप्तिनिमित्तकादिश्राद्धेषु बोद्धव्यः। तीर्थप्राप्तिनिमित्तकादिश्राद्धेष्वाह्नध्यानाभाव इति विशेषः ॥ अथाभ्युदयिकश्राद्धम्। तत्र प्रथमं तन्नियतपूर्वकृत्यं मातृपूजाविधिः। प्रातःकाले स्नातः कृतनित्यक्रियः कुडचे फलके वा स्थापितरक्षिकासप्तदशतमे गणपतिसहितषोडशमातॄः मृत्तिकामयीं श्रियं तदभावे तामपि रक्षिकायां पूजयेत् ॥ तत्र मातरश्च–गौरी पद्मा शची मेधा सावित्री विजया जया ॥ देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ हृष्टिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता। इति। तत्र क्रमः। आचम्य प्राङ्मुख उपविश्य प्रथमरक्षिकामारभ्य क्रमेण गणपतिरसि गौर्यसि पद्माऽसि शच्यसि मेधाऽसि सावित्र्यसि विजयाऽसि देवसेनाऽसि स्वधाऽसि स्वाहाऽसि मातरः स्थ लोकमातरः स्थ हृष्टिरसि तुष्टिरसि आत्मकुलदेवताऽसि श्रीरसि इत्युक्त्वाऽक्षतानादाय पुनः प्रथमरक्षिकामारभ्य ॐभूर्भुवः स्वः गण

पते इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः गौरि इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः पद्मे इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः शचि इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः मेधे इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः सावित्रि इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः विजये इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः जये इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः देवसेने इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः स्वधे इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः स्वाहे इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः मातर इहागच्छत इह तिष्ठत। ॐ भूर्भुवः स्वः लोकमातर इहागच्छत इह तिष्ठत। ॐ भूर्भुवः स्वः हृष्टे इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः पुष्टे इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वस्तुष्टे इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः आत्मकुलदेवते इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः श्रीः इहागच्छ इह तिष्ठ। एवं गणपतिसहिता एता मातॄः श्रियं च प्रत्येकमोङ्कारव्याहृतिपूर्वकमावाह्य स्थापयित्वा ॐ मनोजूतिर्जुषतामाज्यं बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञꣳसमिमं दधातु॥ विश्वे देवासऽ इह मादयन्तामो ३ म्प्रतिष्ठ॥ इत्यक्षतान्विकीर्य्य एकदैवप्रतिष्ठां कुर्यात्। ततः

पाद्यादि गृहीत्वा प्रथमत आरभ्य एतानि पाद्यार्घ्याचमनीयस्नानीयपुनराचमनीयानि । ॐ गणपतये नम इदमनुलेपनम् । ॐ गणपतये नमः इमानि पुष्पाणि । ॐ गणपतये नमः इति त्रिः पूजयेत् । एतानि गन्धपुष्पधूपदीपताम्बूलनैवेद्यान्यर्पयेत् । ॐ । गणपतये नमः । एवमेव ॐ गौर्यै नमः ॐ पद्मायै नमः ॐ शच्यै नमः ॐ मेधायै नमः ॐ सावित्र्यै नमः ॐ विजयायै नमः ॐजयायै नमः ॐ देवसेनायै नमः ॐ स्वधायै नमः ॐ । स्वाहायै नमः । ॐ मातृभ्यो नमः ॐ लोकमातृभ्यो नमः ॐ हृष्ट्यै नमः ॐ तुष्ट्यै नमः ॐ आत्मनः कुलदेवतायै नमः ॐ श्रियै नमः इति पाद्यादिभिः प्रत्येकमर्चयेत् । ततो गणपतिश्रीसहिताः षोडश मातरः क्षमध्वमिति विसर्जनम् । ॐ श्रीर्मयि रमस्वेति । ततो घृतेन भित्तौ पञ्च सप्त वा रेखा उत्तरोत्तरक्रमेण कुर्यात् । ताश्चपलेन प्रयच्छेदनेन मन्त्रेण ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्ष इत्यनेन भित्तौ त्रिः पञ्च सप्त वा घृतधारा दद्यात् ॥ अथाभ्युदयिकश्राद्धप्रयोगः ॥ तत्र दक्षिणोत्तरक्रमेण द्वादशस्थानेषु प्रत्येक

मासादितद्द्रव्यं ज्वलितप्रदीपदेशमागत्याचम्य प्राङ्मुख उदङ्मुखो वोपविशेत् । सव्येन सर्वं कर्म कर्तव्यम् । ऋजव एव कुशास्तिलकार्ये यवाः कर्तव्याः।ततः अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ ॐ पुण्डरीकाक्षः पुनात्विति श्राद्धीयद्रव्याणि सिञ्चेत्कुशोदकेन । ततः कुशयवजलान्यादाय ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुकदेवीनां नान्दीमुखीनां तथाऽमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकामुकशर्मणां नान्दीमुखानां तथामुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकामुकशर्मणां नान्दीमुखानाममुकगोत्रस्यामुकस्य कर्तव्यामुककर्मनिमित्तकमाभ्युदयिकश्राद्धमहं करिष्ये इति संकल्पयेत् । ततो गायत्रीं त्रिर्जपित्वा ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमो नमः इति त्रिर्जपेत् । ततः ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुकदेवीनां नान्दीमुखीनामाभ्युदयिकश्राद्धसंबन्धिनो विश्वेदेवा इदमासनं वो नमः इति कुशत्रयरूपं सपवित्रं सयवमासनं दक्षिणत आरभ्योत्सृजेत् ॥ एवं यथोत्तरम् ॐ अद्यामुक

गोत्राणां पितृपितामहप्रपितामहानाममुकामुकामुकशर्मणां नान्दीमुखानामाभ्युदयिकश्राद्धसंबन्धिनो विश्वेदेवाः इदमासनं वो नमः । ॐ अद्यामुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकामुकशर्मणां नान्दीमुखानामाभ्युदयिकश्राद्धसंबन्धिनो विश्वेदेवा इदमासनं वो नमः । ॐ अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुखि आभ्युदयिकश्राद्धे इदमासनं ते नमः । एवं पितामहीप्रपितामहीभ्यामासनं दद्यात् । ॐ अद्यामुकगोत्र पितरमुकशर्मन्नान्दीमुखाभ्युदयिकश्राद्धे इदमासनं ते नमः । एवं प्रमातामहवृद्धप्रमातामहयोरपि । तत आवाहनम् ॐ विश्वान्देवानहमावाहयिष्ये इत्युक्त्वा ॐ विश्वे देवास आगत शृणुताम इमꣳहवम् ॥ एदं बर्हिर्निषीदत इत्यावाह्य ॐ यवोऽसि यवयास्मद्द्वेषो यवयाऽरातीः इति देवपात्रे यवान्विकीर्य ॐ विश्वे देवाः शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उपद्यविष्ठ ॥ ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम् ॥ ॐ आगच्छन्तु महाभागा विश्वे देवा महाबलाः ॥ य अत्र योजिताः श्राद्धे सावधाना भवन्तु ते इति पठेत् । ॐ नान्दीमुखान् पितॄनहमावाहयिष्ये इत्युक्त्वा ॐ उशन्तस्त्वा निधिमह्युशन्तः समिधीमहि ॥

उशन्तु शत आवह पितॄन्हविषे अत्तवे इति पितॄनावाह्य ॐ अपहता असुरा रक्षाᳫसि वेदिषदः ॥ इति मात्रादिपात्रे यवान्विकीर्य्य ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ॥ अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मानिति पठित्वाऽर्घ्यकरणम् ॥ तत्र देवपूर्वकं सर्वेष्व र्घ्यपात्रेषु पवित्राणि कृत्वा ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये ॥ शंय्योरभिस्रवन्तु नः इति जलं क्षिपेत् । ततो देवताऽर्घ्यपात्रेषु ॐ यवोसि यवयास्मद्द्वेषो यवयारातीरिति यवान् क्षिपेत् । मात्रादिपात्रेषु ॐ यवोऽसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रत्नवद्भिः पृक्तः पुष्ट्या नान्दीमुखाँल्लो कान् प्रीणाहि नः स्वाहेति मन्त्रेण यवान् क्षिपेत् । ततः प्रत्येकं गन्धपुष्पे तूष्णीं क्षिपेत् । ततः प्रथमंदेवपात्रं वामहस्ते कृत्वा तत्रस्थं पवित्रं भोजनपात्रे निधाय तदुपरि किञ्चिदुदकान्तरं दत्त्वा ॐ यादिव्या आपः पयसा संबभूवुर्याआन्तरिक्षा उत पार्थिवीर्याः ॥ हिरण्यवर्णा यज्ञियास्ता नऽ आपः शिवाः शᳫस्योना सुहवा भवंत्विति पठित्वा कुशत्रययवजलान्यादाय ॐ अद्यामुकगोत्राणांमातृ पितामहीप्रपितामहीनाममुकामुकामुकदेवीनां नान्दीमुखीनाम् आभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवाः

इदं वो हस्तार्घ्य नमः। एवमेव पित्रादिश्राद्धे देवेभ्यो मातामहादिदेवेभ्यश्च हस्तार्घ्यं दद्यात्।
ततो मातुरर्घ्यपात्रमादाय पूर्ववत्कृत्वा ॐ यादिव्या इत्यादि पठित्वा कुशादीन्यादाय ॐ अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुखि आभ्युदयिकश्राद्धे इदं ते हस्तार्घ्यं नमः। एवं पितामहीप्रपितामह्योरपि दद्यात्। ततः पित्राद्यर्घ्यपात्रमादाय सर्वं पूर्ववत्कृत्वा कुशादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकशर्म्मन्नान्दीमुखाऽऽभ्युदयिकश्राद्धे इदं ते हस्तार्घ्य नमः। एवमेव पितामहादिपञ्चभ्यो हस्तार्घ्यं दद्यात्। ततोऽवशिष्टजलपवित्रयुतं प्रथमं देवार्घ्यपात्रमादाय ॐ विश्वेभ्यो देवेभ्यः स्थानमसीति देवासनदक्षिणभागे उत्तानं स्थापयेत्। एवमपरदेवार्घ्यपात्रद्वयं तत्तदासनदक्षिणभागे उत्तानं स्थापयेत्। ततः पितामहीप्रपितामहीपात्रद्वयस्थितं पवित्रादि मात्रर्घ्यपात्रे निधाय मात्रर्घ्यपात्रं पितामह्यर्घ्यपात्रोपरि तत्पात्रं प्रपितामह्यर्घ्यपात्रोपरि धृत्वा दक्षिणकरेणादाय ॐ मातृभ्यः स्थानमसि इति मात्रासनवामभागे न्युब्जीकुर्यात्। एवमेव पित्राद्यर्घ्यपात्राणां मेलनं कृत्वा पित्रासनवामभागे ॐ पितृभ्यः स्थानमसि इत्यर्घ्यपात्राणि न्युब्जीकुर्यात्। एवमेव माता

महाद्यर्घ्यपात्राणां मलनं कृत्वा मातामहासनवामभागे ॐ मातामहप्रमातामहवृद्धप्रमातामहेभ्यः स्थानमसीति न्युब्जीकुर्यात् । ततो गन्धादिदानम् । तत्र क्रमः । ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुकदेवीनां नान्दीमुखीनामाभ्युदयिकश्राद्धसम्बन्धिनो विश्वेदेवाः एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि वो नमः । एवं पित्रादिदेवेभ्यो मातामहादिदेवेभ्यश्च दद्यात् । ततः ॐ अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुखि आभ्युदयिकश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलसिन्दूरवासांसि ते नमः । एव पितामहीप्रपितामहीभ्यामपि गन्धादिदानम् । ततः ॐ अद्यामुकगोत्र पितरमुकशर्मन् नान्दीमुखाऽऽभ्युदयिकश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ते नमः । एवं पितामहादिपञ्चभ्योऽपि गन्धादिदानम् । ततो जलेन सर्वासनानि भोजनपात्रसहितानि चतुष्कोणमण्डलेन वेष्टयेत् । ततः सजलं पुटकादौ हस्तेनैव सघृतमन्नम् ॐ अग्नये कव्यवाहनाय स्वाहा ॐ सोमाय पितृमते स्वाहा इत्याहुतिद्वयं जुहुयात् । ततोऽपसव्यं कृत्वा दक्षिणामुखः पातितवामजानुर्मोटकतिलजलान्यादाय ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो

नमः इति भूस्वामिने किंचिदन्नं दद्यात्। ततः सव्यं कृत्वा प्राङ्मुख उदङ्मुखो वा हुतशेषमन्नं देवपूर्व कपात्रेषु किंचिद्दत्त्वा पिण्डार्थं च किंचिदवशेषयेत्। ततोऽन्यदन्नं यथासंभवं सर्वत्र परिविष्य घृतं जलं च तत्रोपनीय पात्रमालभेत। तत्र क्रमः। उत्तानपाणिभ्यां प्रथमं देवपात्रं स्पृष्ट्वा ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृते अमृतं जुहोमि स्वाहा इति पठित्वा ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्॥ समूढमस्य पांसुरे॥ कृष्ण हव्यमिदं रक्ष मदीयमिति पठित्वा ॐ इदमन्नमित्यन्ने ॐ इमा आप इति जले ॐ इदमाज्यमिति घृते ॐ इदं हविरिति पुनरन्ने इति दक्षिणाङ्गुष्ठमारोप्य ॐ यवोसि यवयास्मद्द्वेषो यवयारातीरिति यवान् विकीर्य्य कुशादीन्यादाय ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नान्दीमुखीनामाभ्युदयिकश्राद्धसंबन्धिनो विश्वेदेवा इदमन्नं सोपकरणं वो नमः। यदैकमेव पात्रं भवति तदा वामेन पाणिना पात्रमत्यजन्नेव ॐ इदं विष्णुरित्यादि पठित्वा यवप्रक्षेपं कृत्वा कुशादीन्यादाय पित्राद्युल्लेखेन पित्रादिदेवेभ्योऽप्यन्नमुत्सृजेत्। एवमेव मातामहादिदेवेभ्यः। भिन्नभिन्नपात्रपक्षे ॐ पृथिवी ते

पात्रमित्यादीनां सर्वेषामावृत्तिः। ततो मातृपात्रमुत्तानाभ्यामेव कराभ्यां स्पृष्ट्वा पृथिवी ते पात्रमित्यादि ॐ इदं विष्णुरिति पठित्वा ॐकृष्ण कव्यमिदं रक्ष मदीयम् ॐ इदमन्नमित्यन्ने ॐइमा आप इति जले ॐइदमाज्यमिति घृते ॐइदं हविरिति पुनरन्ने दक्षिणकराङ्गुष्ठमारोप्य ॐअपहताऽअसुरा रक्षाꣳसि वेदिषदः इत्यन्नोपरि यवान्विकीर्य्य ॐ अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुख्याभ्युदयिकश्राद्धे इदमन्नं सोपकरणं ते नमः। एवं पात्रालम्भनादिकं कृत्वा प्रत्येकं पितामहीप्रपितामहीभ्यामपि दद्यात्। एवं पितृपात्रमालभ्य ॐ पृथिवी ते पात्रमित्यादि पठित्वा पूर्ववत्सर्वं कृत्वा ॐ अद्यामुकगोत्र पितरमुकशर्म्मन्नान्दीमुखाभ्युदयिकश्राद्धे इदमन्नं सोपकरणं ते नमः इति पित्रेऽन्नमुत्सृजेत्। एवं पितामहादिभ्यः पञ्चभ्योऽपि प्रत्येकमन्नमुत्सृजेत्। ततः प्राञ्जलिः ॐ अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत्॥ तत्सर्वमच्छिद्रमस्त्विति जपेत्। दर्भेषूपविश्य गायत्रीं त्रिर्जपित्वा ॐ मधु मधु मध्विति जपेत्। मधुव्वाता इत्यादि त्र्यृचं जपेत्। पितृमन्त्रान् ॐ उदीरतामवर इत्यादीञ्जपेत्। अन्यानि तु पुरुषसूक्तादीनि पवित्राणि जपेत्। ततः प्रागग्रकुशत्रयं भूमावा

स्तीर्य्य जलेन प्रोक्ष्य जलप्रोक्षितं सयवघृतमन्नं कुशादिना ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ॥ भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् इति मन्त्रेण कुशोपरि अन्नं विकिरेत् । तत आचम्य हरिं स्मृत्वा गायत्रीं त्रिर्जपेत् । चतुरस्त्रां पिण्डयोग्यां भूमिं परिष्कृत्य उत्तरोत्तरक्रमेण स्थानत्रये प्रादेशमात्रं परिमाय प्रागग्रां रेखां दर्भपिञ्जलीमूलेन ॐ अपहता असुरा रक्षा ँसि वेदिषद इति रेखात्रयं कुर्यात् । ततः प्रत्येकं रेखात्रयोपरि ॐ ये रूपाणि प्रति मुञ्चमाना असुराः सन्तः स्वधया चरन्ति ॥ परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकान्प्रणुदात्य स्स्मात इति मन्त्रेणाङ्गारान्भ्रामयेत् । तदुपरि प्रत्येकं कुशत्रयमास्तीर्य ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥ नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥ इति त्रिर्जपित्वा प्रत्येक मवनेजनं दद्यात् । तत्र क्रमः । यवजलगन्धपुष्पैर्नव पात्राणि पूरयित्वा कुशादीन्यादाय ॐ अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुखि आभ्युदयिकश्राद्धे पिण्डस्थानेऽत्रावनेनिक्ष्व ते नमः इति सर्वदक्षिणकुशत्रयमूले मात्रेऽवनेजनं दद्यात । किञ्चिज्जलमवशेषयेत् । एवमेव पात्रान्तरमादाय

तत्कुशमध्ये पितामह्यै अवनेजनं दद्यात् । तत्कुशत्रयाग्रे प्रपितामह्यै अवनेजनं दद्यात् । ततश्चापर पात्रमादाय कुशादींश्चादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् नान्दीमुखाभ्युदयिकश्राद्धपिण्ड स्थानेऽत्रावनेनिक्ष्व ते नमः इति मध्यस्थितकुशत्रयमूले पित्रेऽवनेजनं दद्यात् । किञ्चिज्जलमवशेषयेत् । एवं तत्तत्कुशत्रयमध्याग्रयोः पितामहप्रपितामहयोरवनेजनं दद्यात् । ततः सप्तमपात्रमादाय कुशादींश्चादाय ॐ अद्यामुकगोत्र मातामहामुकशर्मन्नान्दीमुखाभ्युदयिकश्राद्धपिण्ड स्थानेऽत्रावनेनिक्ष्व ते नम इत्यपरकुशत्रयमूले मातामहायावनेजनं दद्यात । एवं प्रमातामह वृद्धप्रमातामहयोरपि । ततो यवदधिबदरीघृतमिश्रान्नेन पिण्डान्निर्माय एकं पिण्डं कुशादींश्चादाय अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुखि आभ्युदयिकश्राद्धे एष पिण्डस्ते नम इति तदवनेजनस्थाने पिण्डं दद्यात् । एवमेव पितामहीप्रपितामहीभ्यां स्वीयस्वीयावनेजनस्थाने पिण्डं दद्यात । ततश्चतुर्थपिण्डमादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् नान्दीमुखाभ्युदयिकश्राद्धे एष ते पिण्डो नमः इति पित्रवनेजनस्थाने पिण्डं दद्यात्। एवं पितामहप्रपितामहयोः । ततः

सप्तमपिण्डमादाय ॐ अद्यामुकगोत्र मातामहामुकशर्म्मन्नान्दीमुखाभ्युदयिकश्राद्धे एष ते पिण्डो नमः इति मातामहावनेजनस्थाने मातामहाय पिण्डं दद्यात्। एवमेव प्रमातामहवृद्धप्रमातामहयोः। ततो दर्भमूले करं प्रोक्ष्याचम्य हरिं स्मृत्वा ॐ अत्र मातरो मादयध्वं यथाभागमावृषायध्वमिति पठित्वा उदङ्मुखीभूय श्वासं नियम्य तेनैव पथा मुखं परावर्त्तयन् ॐ अमीमदन्त मातरो यथाभागमावृषायिषतेति जपेत्। एवमत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति जपित्वा उदङ्मुखीभूय श्वासं नियम्य तेनैव पथा मुखं परावर्त्तयन् अमीमदन्तेत्यादि जपेत्। एवमेव मातामहादिपक्षे मन्त्रजपः। ततोऽवनेजनावशिष्टजलेन प्रत्यवनेजनं दद्यात्। तत्र क्रमः। ॐ अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुख्याभ्युदयिकश्राद्धपिण्डे प्रत्यवनेनिक्ष्व ते नमः इति तत्पिण्डोपरि दद्यात्। एवं पितामहीप्रपितामहीभ्याम्। तथा ॐ अद्यामुकगोत्र पितरमुकशर्मान्नान्दीमुखाभ्युदयिकश्राद्धे पिण्डेऽत्र प्रत्यवनेनिक्ष्व ते नमः इति पिण्डोपरि प्रत्यवनेजनं दद्यात्। एवमेव तत्तत्पिण्डोपरि पितामहादिपञ्चभ्यो दद्यात्। ततो नीवीं विस्रस्याचम्य हरिं स्मृत्वा सूत्रा

ण्यादाय ॐ नमो वो मातरो रसाय नमो वो मातरः शोषाय नमो वो मातरो जीवाय नमो वो मातरः स्वधायै नमो वो मातरो घोराय नमो वो मातरो मन्यवे नमो वो मातरो मातरो नमो वो गृहान्नो मातरो दत्त सतो वो मातरो देष्म एतद्वो मातरो वास इति मातॄणां पिण्डत्रयोपरि सूत्रं दद्यात्। ततः ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितर स्स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरोदेष्म एतद्वः पितरो वास इत्यनेन पित्रादिपिण्डषट्कोपरि प्रत्येकं सूत्रं दद्यात्। ततः कुशत्रययवजलान्यादाय ॐ अद्यामुकगोत्रे मातरमुकि देवि नान्दीमुखि आभ्युदयिकश्राद्धे पिण्डे एतत्ते वासो नम इति सूत्रमुत्सृजेत्। एवमेव पितामहीप्रपितामहीभ्याम् ॐ अद्यामुकगोत्र पितरमुकशर्मन्नान्दीमुखाभ्युदयिकश्राद्धे पिण्ड एतत्ते वासो नमः एवं पितामहादिपञ्चभ्यः सूत्रं दद्यात्। ततो गन्धपुष्पधूपदीपताम्बूलादिभिः प्रत्येकं पिण्डानभ्यर्च्य ॐ शिवा आपः सन्त्विति जलम् ॐ सौमनस्यमस्त्विति पुष्पम् ॐ अक्षतं चारिष्टमस्त्विति तण्डुलान् प्रत्येकं पात्रेषु निक्षिप्य कुशा

दीन्यादाय ॐ अद्यामुकगोत्राया मातुरमुकदेव्या नान्दीमुख्या आभ्युदयिकश्राद्धे दत्तैतदन्नपाना दिभिः माता नान्दीमुखी प्रीयतामित्यक्षय्योदकमुत्सृजेत् । एवं पितामह्याः प्रपितामह्याश्चाक्षय्योदकं दद्यात् । तथा अद्यामुकगोत्रस्य पितुरमुकशर्मणो नान्दीमुखस्याभ्युदयिकश्राद्धे दत्तैतदन्नपानादिभिः पिता नान्दीमुखः प्रीयतामिति पित्रे । एवं पितामहादिपञ्चभ्योऽक्षय्योदकं दद्यात् । ततः ॐ अघोरा मातरः सन्त्विति मातृपिण्डत्रयोपरि पूर्वाग्रां जलधारां दद्यात्। ॐ अघोराः पितरः सन्त्विति पित्रादिपिण्डषट्कोपरि जलधारां दद्यात्। ततः ॐ गोत्रं नो वर्धतां दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्तु वो॥ अन्नं च नो बहु भवेद्, वदतिथींश्च लभेमहि॥ याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ॥ एताः सत्या आशिषः सन्तु इत्याशिषः प्रार्थयेत् । ततः सपवित्रकुशत्रयाणि प्रत्येकं मात्रादिपिण्डत्रये पित्रादिपिण्डत्रये मातामहादिपिण्डत्रये च धृत्वा ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधा स्थ तर्प्पयत मे मातृरिति मात्रादिपिण्डोपरि दक्षिणाग्रां जलधारां दद्यात् । ततस्तथैव ॐ ऊर्ज्जं वहन्तीरित्यादि पठित्वा पित्रादिपिण्डषट्कोपरि जलधारां दद्यात् । ततः पिण्डाना

घ्राय उत्थाप्य पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत्। अर्घपात्राण्युत्तानीकृत्य दक्षिणां दद्यात्। दक्षिणा द्रव्यं च। फलमूले फलं मूलं वा प्रत्येकं तत्र क्रमः। ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाम मुकामुकामुकदेवीनां नान्दीमुखीनामाभ्युदयिकश्राद्धसंबन्धिनां विश्वेषां देवानां कृतैतदाभ्युदयिक श्राद्धप्रतिष्ठार्थमिमे फलमूले वनस्पतिदैवते यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति तानि दद्यात्। एवं पित्रादिश्राद्धसंबन्धिविश्वेदेवश्राद्धदक्षिणां च मातामहादिश्राद्धसंबन्धि विश्वेदेवश्राद्धदक्षिणां च दद्यात् ॐ अद्यामुकगोत्राया मातुरमुकदेव्या नान्दीमुख्याः कृतै तदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमे फलमूले वनस्पतिदैवते इत्यादि। एवं पितामहीप्रपितामह्यो रपि। ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणो नान्दीमुखस्य कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमे फल मूले वनस्पतिदैवते इत्यादि। एवं पितामहादिश्राद्धदक्षिणां च दद्यात्। ततः ॐ वाजेवाजे० इत्या दिना मात्रादिविसर्जनम्। ॐ विश्वेदेवाः प्रीयन्तामिति देवविसर्जनम्। ततो देवताभ्य० इति त्रिर्जपः दीपनिर्वापणमाचमनम् प्रमादादित्यादिपाठः श्राद्धीयवस्तुप्रतिपत्तिः॥ इत्याभ्युदयिकश्राद्ध

पद्धतिः ॥ अथनित्यश्राद्धप्रयोगः ॥ आचम्य उदङ्मुख उपविष्टः ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिरिति पठित्वा ॐ पुण्डरीकाक्षः पुनात्विति कुशत्रयजलेन श्राद्धीयद्रव्याणि सिञ्चेत् । ततः कुशत्रयतिलजलान्यादाय ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकामुकशर्मणां मातामहप्रमातामहवृद्धप्रमतामहानाममुकामुकामुकशर्मणां नित्यश्राद्धमहं करिष्ये इति संकल्पं कुर्य्यात् । ततस्त्रिर्गायत्रीं जपित्वा ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमोनमः इति त्रिर्जपेत् । ततोऽपसव्यं कृत्वा पातितवामजानुर्मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् नित्यश्राद्धे दमासनं ते स्वधेति तिलजलप्रोक्षितं मोटकरूपमासनं दक्षिणाग्रं पित्रे दद्यात् । एवमेव पितामहादिपञ्चभ्यः प्रत्येकमासनानि दद्यात् । ॐ अपहता असुरा रक्षाꣳसि वेदिषदः इति श्राद्धदेशे तिलान्विकीर्य ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधयाऽमदन्तोधिब्रुवन्तु ते वन्त्वस्मानिति जपेत् । ततः ॐ अद्यामुकगोत्र पितरमुकशर्मन् नित्यश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलानि ते स्वधा

इति यथासंभवं पित्रे गन्धादि दद्यात् ।एवमेव पितामहादिभ्योऽपि दद्यात् । ततो जलेन मण्डलं चतुष्कोणमन्नस्य चतुर्दिशं कृत्वाऽन्नपरिवेषणं कुर्यात् । ततो मधुव्वाताऽऋतायते मधुक्षरन्ति सिन्धवः माध्वीर्न्नः सन्त्वोषधीः ॥ मधुनक्तमुतोषसो मधुमत्पार्थिव ँ रजः॥मधु द्यौरस्तु नः पिता॥मधुमान्नो वनस्पतिर्मधु मा ँ अस्तुसूर्यः ॥ माध्वीगावो भवन्तु नः ॐ मधु मधु मध्वित्यभिमन्त्रयेत् ॥ ततोऽन्नपात्रं व्यस्ताभ्यामधोमुखाभ्यां पाणिभ्यां स्पृशन् ॐपृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ॐइदं विष्णुर्व्विचक्रमे त्रेधा निदधे पदम्॥समूढमस्य पा ँ सुरे इति जपित्वा वामहस्तेनान्नपात्रमत्यजन् ॐकृष्ण कव्यमिदं रक्ष मदीयमिति पठित्वा । ॐ इदमन्नम् ॐइमा आपः ॐ इदमाज्यम् ॐइदं हविरित्यन्नजलघृतेषु पुनरन्ने च दक्षिणाङ्गुष्ठं निवेश्य ॐअपहताऽअसुरा रक्षा ँसि वेदिषद इत्यन्नोपरि तिलान्प्रक्षिप्य मोदकादीन्यादाय ॐअद्यामुकगोत्रपितरमुकशर्मन् नित्यश्राद्धे इदमन्नं सोपकरणं ते स्वधा इति पित्रेऽन्नमुत्सृजेत् । एवं पितामहादिभ्यः पञ्चभ्योऽप्यन्नमुत्सृजेत् । अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् । तत्सर्वमच्छिद्रमस्त्विति जपेत् । ततो दर्भेष्वासीनः गायत्रीं मधुव्वाता इत्यादि

त्र्यृचम् ॐ मधुमधु मध्विति च जपेत्। ततः ॐ कृणुष्वपाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन॥
त्रिष्वीमनुप्रसितिं द्रुणानो स्तासिविध्यरक्षसस्तपिष्ठैः ॥१॥ तवभ्रमासआशु या पतन्त्यनुस्पृशधृषता
शोशुचानः॥ वपूंष्यग्ने जुह्वापतङ्गानसन्दितो विसृज विष्वगुल्काः॥२॥ प्रतिस्पशो विसृज तूर्णितमोभ
वापायुर्व्विशो अस्याअदब्धः ॥ योनोदूरेऽअघशंसोयोऽअन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥ ३ ॥
उदग्ने तिष्ठप्रत्यातनुष्वन्यमित्राँ॰ओषतात्तिग्महेते॥ योनो अरातिं॰ समिधान चक्रेननीचा तं धक्ष्यत
सन्नशुष्कम्॥४॥ ऊर्ध्वो भव प्रति विद्ध्याद्ध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने॥ अवस्थिरा तनुहि या तु
जूनांजामिमजामिम्प्रमृणीहि शत्रून्॥ अग्नेष्ट्वा तेजसा सादयामि इति रक्षोघ्नीर्ऋचः पठेत्। ततस्तिला
न्भूमौ क्षिप्त्वा ॐ उदीरतामित्यादिपितृमन्त्रान् ॐ सहस्रशीर्षेत्यादि पुरुषसूक्तम् ॐ आशुः
शिशान इत्यादिकमप्रतिरथमन्यानि पवित्राणि यथाशक्ति जपेत्। नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेक
चक्षुषे॥ नमः पिनाकहस्ताय वज्रहस्ताय वै नमः इति पठेत्। ततः ॐ अद्यामुकगोत्राणां पितृपिता
महप्रपितामहानाममुकामुकामुकशर्मणांतथाऽमुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुका

मुकामुकशर्मणां कृतैतन्नित्यश्राद्धप्रतिष्ठार्थमेककाकिणीमूल्यकं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां च दातुमहमुत्सृजे इति मोटकादिना दक्षिणां च दद्यात्। ततः सव्यं कृत्वा ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। नमः स्वाहायै स्वधायै नित्यमेव नमो नमः। इति त्रिः पठेत्। प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः संपूर्णं स्यादितिश्रुतिरिति पठित्वा विष्णुं स्मरेत्। नित्यश्राद्धीयमन्नं ब्राह्मणाय प्रतिपादयेत् जले वा क्षिपेत्। इति श्राद्धविवेके चतुर्थः परिच्छेदः॥ ॥ श्रीमहामहोपाध्यायश्रीरुद्रधरकृतः श्राद्धविवेकः समाप्तः॥ शुभं भूयात्॥

---

इदं पुस्तकं क्षेमराज श्रीकृष्णदासेन स्वीये "श्रीवेंकटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशितम्। संवत् १९८४, शके १८४९।

पुस्तकें मिलनेका ठिकानाः—

खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस,
बम्बई.

गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेङ्कटेश्वर" प्रेस,
कल्याण--बम्बई.

## अत्रेयमभ्यर्थना.

अस्माकं मुद्रणालये वेद–वेदान्त–धर्मशास्त्र–प्रयोग–योग–साङ्ख्य–ज्योतिष–पुराणेतिहास–वैद्यक–मन्त्र–स्तोत्र–कोश-काव्य–चम्पू–नाटकालङ्कार–संगीत–नीति–कथाग्रन्थाः, बहवः स्त्रीणां चोपयुक्ता ग्रन्थाः, बृहज्ज्योतिषार्णवनामा बहुविचित्रचित्रितोऽयमपूर्वग्रन्थः संस्कृतभाषया, हिन्दीमार्वाडयादिभाषाग्रन्थास्तत्तच्छास्त्राद्यर्थानुवादकाः, चित्राणि, पुस्तकमुद्रणोपयोगिन्यो यावत्यस्सामग्र्यः, स्वस्वलौकिकव्यवहारोपयोगिचित्रचित्रिता-लिखितपत्रवत्पुस्तकानि च मुद्रयित्वा प्रकाश्यन्ते सुलभेन मूल्येन विक्रयाय। येषां यत्राभिरुचि-स्तत्तत्पुस्तकाद्युपलब्धये एवं नव्यतया स्वस्वपुस्तकानि मुमुद्रयिषुभिः सुलभयोग्य-मौल्येन सीसकाक्षरैः स्वच्छोत्तमोत्तमपत्रेषु मुद्रिततत्पुस्तकानां स्वस्व-समयानुसारेणोपलब्धये च पत्रिकाद्वारा बोधनीयोऽस्मि।

अधिकमस्मदीयसूचीपुस्तकस्य भिन्नभिन्नविषयकस्य प्रापणेन "श्रीवेङ्कटेश्वर" पत्रप्रापणेन च ज्ञेयमिति शम्।

पुस्तकप्राप्तिस्थानम्–

**क्षेमराज श्रीकृष्णदास "श्रीवेङ्कटेश्वर" मुद्रणयन्त्रालयाध्यक्ष–बम्बई.**

**गङ्गाविष्णु श्रीकृष्णदास, "लक्ष्मीवेङ्कटेश्वर" मुद्रणयन्त्रालयाध्यक्ष, कल्याण–मुम्बई.**

